श्रीः ।

# विवाहपटलम् ।

## सारसमुच्चयः

ग्रंथोऽयं

सूर्यपुर(सुरत)स्थ ज्योतिर्विद्

कृष्णशंकर केशवराम रैक इत्येतैः संपादितः.


मुंबय्यां

पाण्डुरङ्ग जावजी इत्येतैः

स्वीये "निर्णयसागर" मुद्रणालये मुद्रयित्वा प्रकाशितः ।

प्रतयः १०००.

शकाब्दाः १८५६, सन १९३५.

मूल्यं ४ आणकाः

ॐ

# विवाहपटलम् ।

## सारसमुच्चयः ।

### राशिकूटाध्यायः ॥ १ ॥

मंगलाचरणम्—

सुरासुरैर्वंदितपादपद्मं शिवात्मजं भक्तजनस्य सिद्धिदम् ।
तं विघ्नराजं प्रणतोऽस्मि नित्यं वागीश्वरीं देवगुरुं हरिं तम्॥१॥

विश्वरूपेण यः साक्षात् श्रीविष्णुं ब्रह्मविद्गुरुम् ।
हृच्चिंतकस्य सुखदं तं मुकुंदं नमाम्यहम् ॥ २ ॥

नानाशास्त्रोद्धृतं सारं वैद्यनाथेन यत्कृतम् ।
अन्यैश्च यद् गृहीतं तं वक्ष्ये सारसमुच्चयम् ॥ ३ ॥

वर्णविचारः—

मीनाद्ब्राह्मणपूर्वा वर्णाः कन्योत्तमो वरः श्रेष्ठः ।
मध्यस्थः समवर्णे नीचो हीनोद्भवः पुरुषः ॥ ४ ॥

राशिस्वरूपाणि । वराहमिहिरः—

मत्स्यौ घटी नृयुगलं सगदं सवीणं
चापी नरोऽश्वजघनो मकरो मृगास्यः ।
तौली ससस्यदहना प्लवगा च कन्या
शेषाः स्वनामसदृशाः खचराश्च सर्वे ॥ ५ ॥

राशिस्वभावः—

मेषो दैन्यमुपैति गर्वति वृषो नानामतिर्मन्मथः
शूरः कर्कटको धृतिर्वनपतेः कन्यात्र मायान्विता ।

सत्त्वं रज्जुतुला अलिर्मलिनता चापश्च पापाशयो
मौखर्यं मकरे घटे चतुरता मीने च धीरा मतिः ॥६॥

वश्यविचारः—

वश्या मनुष्यजातेः सिंहं हित्वा जलोद्भवा भक्ष्याः ।
विसरीसृपाश्च सिंहस्यान्यं लोकात्परिज्ञेयम् ॥ ७ ॥

ताराविचारः—

जन्मतारा शुभा प्रोक्ता द्वाभ्यामेकर्क्षसंस्थिता ।
त्यक्त्वा त्रिपंचसप्ताख्या शेषोद्वाहे मिथः शुभा ॥ ८ ॥
वरर्क्षाद्गणयेद्यावत्कन्यर्क्षं वरभं पुनः ।
कन्यर्क्षान्नवहृच्छेषं त्रीष्वद्रिभमसत्स्मृतम् ॥ ९ ॥

योनिविचारः—

अश्वेभाजफणिद्वयं श्ववृषभुज्ञेषोतवो मूषक-
श्चाखुर्गौः क्रमशस्ततोऽपि महिषी व्याघ्रः पुनः सैरिभी ।
व्याघ्रैणौ मृगमंडलौ कपिरथो बभ्रुद्वयं वानरः
सिंहोऽश्वो मृगराट् पशुश्च करटी योनिस्तु भानामियम् १०

माधवः—

गोव्याघ्रमश्वमहिषं नकुलं द्विजिह्व-
मोतून्दुरं हरिगजं मृगसारमेयम् ।
मेषप्लवंगमिदमन्यदपीह वैरं
त्याज्यं वधूपुरुषयोर्नृपभृत्ययोश्च ॥ ११ ॥

भोजदेवः—

अनुक्तेषु पुनः कल्प्यमृक्षेषु व्यवहारतः ।
बलाबलं विचारज्ञैरभीष्टार्थस्य सिद्धये ॥ १२ ॥

हारीतः—

वश्ये योनौ वश्यवैरं च भक्ष्यं प्रोक्तं त्रेधा गर्गमुख्यैर्मुनींद्रैः ।
एवं ज्ञात्वा लोकतश्चिंतनीयं तज्ज्ञैर्यस्मात्सौख्यवृद्धौ नृनार्योः

राशिस्वामिनः—

मेषवृश्चिकयोर्भौमः कन्यामिथुनयोर्बुधः ।
शनिर्मकरकुंभेशो जीवो मीनधनुर्भृतोः ॥ १४ ॥
आस्फुजित्तौलिवृषयोश्चंद्रः कर्कटराशिपः ।
सिंहस्याधिपतिः सूर्यो नवांशानामधीश्वराः ॥ १५ ॥

जातके—

द्विर्द्वादशं त्रिकोणं च ग्रहमैत्रीयुतं शुभम् ।
योनिदोषो न चात्रास्ति इत्याहुः शौनकादयः ॥ १६ ॥

ग्रहमैत्रीविचारः । वराहमिहिरः—

शत्रू मंदसितौ समश्च शशिजो मित्राणि शेषा रवे-
स्तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदः शेषाः समाः शीतगोः ।
जीवेंदूष्णकराः कुजस्य सुहृदो ज्ञोऽरिः सितार्की समौ
मित्रे सूर्यसितौ बुधस्य हिमगुः शत्रुः समाश्चापरे ॥१७॥
जीवे सौम्यसितावरी रविसुतो मध्योऽपरे त्वन्यथा
सौम्यार्की सुहृदौ समौ कुजगुरू शुक्रस्य शेषावरी ।
शुक्रज्ञौ सुहृदौ समः सुरगुरुः सौरस्य चान्येऽरय-
स्तत्काले च दशा[१०]य[११]बंधु[४]सह[३]जस्वा[२]ंत्ये[१२]षु मित्रं स्थिताः ॥१८॥

---

१ वराहमिहिरः—

मित्रमुदासीनोऽरिर्व्याख्याता ये निसर्गभावेन ।
तेऽधिसुहृन्मित्रसमास्तत्कालमुपस्थिताश्चित्याः ॥
मूलत्रिकोण[५]षष्ठ[६]त्रिकोण[९]निधनै[८]क[१]राशिसम[७]गाः ।
एकैकस्य यथोक्तं भवंति तात्कालिका रिपवः ॥

ग्रहमैत्रीगुणाः पंच द्वे शुभे द्विशुभप्रदे ।
सममेकं बुधैर्ज्ञेयं बलाबलविचारणे ॥ १९ ॥
आयुष्यं प्रथमे प्रीतिर्द्वितीयेऽन्यत्समे समम् ।
चतुर्थे मानसं वैरमायुर्हीयेत पंचमे ॥ २० ॥

गणविचारः—

पूषानिलाश्विनो मित्रविष्णुचंद्रार्कदैवतम् ।
पुनर्वसुद्वयं प्रोक्तं मुनिभिर्देवतागणे ॥ २१ ॥
पूर्वात्रीण्युत्तरात्रीणि रोहिणी भरणी तथा ।
आर्द्रैतानि मनुष्याणां गणः प्रोक्तो मनीषिभिः ॥२२॥
चित्रा ज्येष्ठा धनिष्ठा च विशाखामूलकृत्तिकाः ।
शततारामघाश्लेषा आसुरो गण उच्यते ॥ २३ ॥

ब्रह्मगुप्तः—

प्रीतिः स्ववर्गे नरदेवयोश्च मैत्री कलिः स्यात्सुररक्षसोश्च ।
मृत्युर्भवेद्राक्षसमर्त्ययोश्च कलत्रमित्रस्वगृहेषु चिंत्यम् ॥२४॥

गर्गः—

प्रीतिरायुर्गणे चैके प्रीतिः स्यान्नरदेवयोः ।
अमरासुरयोर्युद्धं मृत्युः स्यान्नरदैत्ययोः ॥ २५ ॥

श्रीपतिः—

प्रीतिः स्मृतैकगणयोरुभयोर्नृनार्योः
सा मध्यमा नरमरुद्गणयोः सदैव ।
रक्षोगणेन सह देवगणस्य वैरं
मृत्युर्निशाचरगणो नृगणस्य नूनम् ॥ २६ ॥
रक्षोगणो यदा पुंसः कन्या भवति मानवी ।
केऽपीच्छंति तदोद्वाहं व्यस्तं कोऽपीह नेच्छति ॥२७॥

विशेषविचारः । भृगुः—

यदा तीव्रगणा नारी नरो नरगणो भवेत् ।
तदोद्वाहो न कर्तव्यो यस्माद्वैधव्यदो ध्रुवम् ॥ २८ ॥

रक्षोमनुष्यर्क्षजयोर्नृनार्यो:
सद्राशिकूटे च भयोनिशुद्धौ ।
उद्वाहमिच्छंति हि धर्मसिद्ध्यै
भेशारिभावेऽपि पुनर्मुनींद्राः ॥ २९ ॥

हरिदेवः—

रक्षोगणो यदि वरो नृगणा कुमारी
सद्राशिकूटखगमैत्रभयोनिशुद्धौ ।
यद्यस्ति तत्र शुभदं करपीडनं स्या-
द्वामभ्रुवां न हि यदा खलु नाडियोगः ॥ ३० ॥

गर्गः—

रक्षोगणो यदा पुंसः कुमारी नृगणा भवेत् ।
सद्भकूटः खगप्रीतिर्योनिशुद्धिः शुभं तदा ॥ ३१ ॥

वराहः—

तीव्रपुंसमनुजा च कन्यका सद्भकूटखगयोश्च मित्रता ।
नाडियोनिषु विशुद्धिता यदा धर्मकामधनवृद्धये तदा ॥३२॥

सप्तर्षयः—

एकग्रहोद्भवानां भवति विवाहः सुखार्थसंपत्त्यै ।
यद्युभयोरेकर्क्षं न भवति यदि वांशको नैकः ॥ ३३ ॥

भोजदेवः—

एकराशौ धनापत्यसौभाग्यजननः स्मृतः ।
एकर्क्षे यदि चैकांशे विवाहो न प्रशस्यते ॥ ३४ ॥

श्रीपतिः—

कुर्यात्सौभाग्यवित्ताप्तिमेकराशौ करग्रहः ।
शस्यते नैकभे कैश्चिदेकांशे नेष्यते परैः ॥ ३५ ॥

हरिदेवः—

एकराशिषु करग्रहः पृथग्भे सुतार्थसुखभर्तृमानदः ।
एकभे न शुभदो मृतिप्रदो नैकभांश उदितः पुरातनैः ॥३६॥

ब्रह्मगुप्तः—

एकराशौ पृथग्भे भवेदुत्तमं तद्वदेवान्यभागे भवेन्मध्यमम् ।
एकभागे त्वनिष्टं हि पाणिग्रहं वर्णयंत्यत्र योषित्सु पुंसः सदा ॥

विशेषश्च—

दंपत्योरेकराशौ चेद्भिन्नपादैकभं यदि ।
विवाहं शुभदं प्राहुर्वसिष्ठासितदेवलाः ॥ ३८ ॥

सप्तर्षयः—

अभिन्नराशौ यदि भिन्नमृक्षं विवाहमिच्छंति हि शौनकाद्याः ।
प्रीतिस्तयो रोहिणिकृत्तिका चेन्न नाडिदोषो न गणोत्थदोषः॥
वह्निप्रजापश्च मृदादितिश्च अर्यम्णहस्तोऽप्यनिलाग्निसर्पाः ।
विशेषविष्णूवरुणाजपं च एकाधिराशौ न च नाडिदोषः ४०

लल्लः—

प्रीतिवित्तसुखदः करग्रहस्त्वेकराशिरिह भिन्नभं भवेत् ।
वारुणाजचरणं यदा तदा नाडिदोषगणजौ न दोषदौ ॥४१॥

वामदेवः—

स्त्रीपुंसोरेकराशिश्चेत्पृथगृक्षं यदा भवेत् ।
वसिष्ठोक्तेविवाहः स्याद्गणनाडी न दोषदौ ॥ ४२ ॥

अष्टधामैत्री । लघुगर्गः—

एकराशौ पृथग्धिष्ण्ये विवाहः शुभदो भवेत् ।
नाडीदोषो न चात्रास्ति दंपत्योश्च चिरायुषम् ॥४३॥

शुभाशुभे भकूटे स्यान्नाडीयोगस्तु मृत्युदः ।
एकराशिं विना प्राहुर्वसिष्ठासितदेवलाः ॥ ४४ ॥

सद्राशिकूटं ग्रहमित्रता च वर्णोऽथ वश्यं च विचिंत्य राशेः ।
ऋक्षस्य नाडीगणयोनितारामैत्री विचार्याऽष्टविधा विवाहे ४५

लक्ष्मीधरस्तु विशेषमाह—

योनिनाडीगणर्क्षादिवश्यमैत्रीस्वभावजाः ।
तारावर्णविशुद्धिश्च प्रीतिरष्टविधा स्मृता ॥ ४६ ॥

राशिकूटखगमैत्रितारकायोनिनाडिगणवर्णशुद्धया ।
राशिवश्यवरदूरतादिभिः प्रीतिभिर्दशगुणाः प्रकीर्तिताः ४७

ग्रंथांतरेऽपि—

मैत्री ग्रहाणामथ राशिकूटं नाडीप्रभेदौ गणवर्गताराः ।
भयोनिशुद्धिर्वधुदूरता च वर्णो वशित्वं दशधा प्रदिष्टम् ४८

एकराशौ पृथग्धिष्ण्ये लभेयुर्दशधा गुणाः ।
एकनाड्यादिभिर्दोषैर्नारिष्टं प्राह भागुरिः ॥ ४९ ॥

राशिकूटभवनाधिपमैत्रीतारकागणविशुद्धिविनाड्यः ।
वर्णशुद्धिरुडुयोनिभवश्ये पाणिपीडनविधौ खलु चिंत्यम् ५०

राशिकूटं गणो मैत्री वर्गोऽथ वश्यतारके ।
नाडी योनिर्वधूदूरं वर्णाश्चेति गुणा दश ॥ ५१ ॥

वश्यं वर्णो भकूटं च मैत्री च वरदूरकम् ।
नाडियोनिगणास्तारा वल्लभत्वं गुणा दश ॥ ५२ ॥

वल्लभत्वकथनं श्रीपतिः—

षट् पौष्णतो द्वादश शांकराच्च पौरंदराद्भानि नव क्रमेण ।
पूर्वार्धमध्यापरभागयुंजि चिरंतनज्यौतिषिकैः स्मृतानि॥५३॥

पूर्वभागयुजि भे पतिः प्रियो योषितामपरभागयोगिनि ।
स्त्री नृणां भवति मध्ययोगिनि प्रेम नूनमुभयोः परस्परम् ५४

पराशरस्तु विशेषमाह—

स्त्रीग्रहैर्वल्लभा नारी पुंग्रहैर्वल्लभो नरः ।
सबलैरुभयोः प्रीतिः सर्वथा स्यात्करग्रहे ॥ ५५ ॥

महादेवः—

भकूटमैत्री खलु वश्यवर्णौ राशेर्गुणाः पंचमकं च दूरम् ।
नाडी गणो योनियुता च तारा सवल्लभा चेति वदंति सन्तः ५६

अन्यच्च—

नाडीमैत्री द्विजस्योक्ता गणवर्णौ च बाहुजे ।
वैश्यस्य राशिदूरं च योनिवर्गौ च शूद्रजे ॥ ५७ ॥
यस्य वर्णाधिका नारी तस्या भर्ता न जीवति ।
यदि जीवति भर्ताऽस्याः पुत्रस्तस्या न जीवति ॥५८॥

भोजराजः—

उत्तमां वर्जयेत्कन्यां विवाहसुहृदंबुभम् ।
धनायुः क्षीयते तेजो योऽधिकां वरयेत्स्त्रियम् ॥५९॥
पूर्वपंचकमेकानां शेषद्वययुतं शुभम् ।
भाव्यं षडष्टके नाडी योगो वा गुणसप्तकम् ॥ ६० ॥

तृतीयलाभं कुलवृद्धयेऽपि बंधुर्दशाख्यं धनपुत्रकारि ।
पुंस्त्री मिथः सप्तमकः सुखायुस्तथैकराशेरपि नान्यदोषः ६१

---

१ पुरुषा रविगुरुभौमा नपुंसकाख्यौ बुधार्कपुत्रौ च ।
नार्यौ भृगुचंद्रमसौ ग्रहस्वभावास्त्रिधा प्रोक्ताः ॥ १ ॥

राशिकूटाख्यसन्नाडी गणयोनिः समित्रता।
तारा स्त्रीदूरवश्यानि दंपत्योः सद्गुणाष्टकम् ॥ ६२ ॥

शुभौ द्विर्द्वादशौ—

मेषझषौ वृषमिथुनौ कर्कहरी घटमृगौ तुलाकन्ये।
हरिषष्ठौ धन्वलिकौ श्रेष्ठौ द्विर्द्वादशौ राशी ॥ ६३ ॥

षडष्टकविषये वृत्तशतेऽपि—

सिंहो मीनयुतस्तुलायुतवृषो धन्वी कुलीरान्वितः
कुंभः कन्यकया युतोऽथ मकरो द्वंद्वान्वितोऽजोऽलिना।
योगेष्वेषु षडष्टकेष्वपि शुभः पाणिग्रहः स्याद्यदा
प्रागुक्तं च गणत्रयं वशगृहं तारानुकूल्यं भवेत् ॥ ६४ ॥

अन्यत्रापि—

मीनालिभ्यां युते कीटे कुंभे मिथुनसंयुते।
मकरे कन्यकायुक्ते कुर्याद्वै नवपंचमम् ॥ ६५ ॥
द्विषष्ठाभ्यां समो राशिर्विषमोऽष्टव्ययान्वितः।
शुभो विलोमतो नेष्टः सिंहोऽपीष्टो बलान्वितः ॥६६॥
विप्राणां दशकूटं स्यात्क्षत्रियाणां तथाष्टकम्।
वैश्यानां कूटषट्कं च शेषाणां तु चतुष्टयम् ॥ ६७ ॥
दुष्टं भकूटं ग्रहमैत्रियुक्तं शुभं भवेद्यद्यपि योनिवैरम्।
योनौ विहीनं गणमैत्रयुक्तं सुतायुरारोग्यकरं नृनार्योः ॥६८॥
पुंराशिः स्त्रीराशेर्द्वादशनवमाष्टमो यदा भवति।
मध्यमयोस्तूभययोः समसुहृदोर्मित्रयोः सुखावाप्त्यै ॥ ६९ ॥

गर्गमुकुंदौ—

कन्यर्क्षाद्वरभं दूरं कन्यादूरमुदीरितम्।
सुखप्रदं विवाहे स्याद् व्यस्तं दुःखप्रदायकम् ॥७०॥

पूर्वभागयुजि भे पतिः प्रियो योषितामपरभागयोगिनि ।
स्त्री नृणां भवति मध्ययोगिनि प्रेम नूनमुभयोः परस्परम् ५४

पराशरस्तु विशेषमाह—

स्त्रीग्रहैर्वल्लभा नारी पुंग्रहैर्वल्लभो नरः ।
सबलैरुभयोः प्रीतिः सर्वथा स्यात्करग्रहे ॥ ५५ ॥

महादेवः—

भकूटमैत्री खलु वश्यवर्णौ राशेर्गुणाः पंचमकं च दूरम् ।
नाडी गणो योनियुता च तारा सवल्लभा चेति वदंति सन्तः ५६

अन्यच्च—

नाडीमैत्री द्विजस्योक्ता गणवर्णौ च बाहुजे ।
वैश्यस्य राशिदूरं च योनिवर्गौ च शूद्रजे ॥ ५७ ॥
यस्य वर्णाधिका नारी तस्या भर्ता न जीवति ।
यदि जीवति भर्ताऽस्याः पुत्रस्तस्या न जीवति ॥५८॥

भोजराजः—

उत्तमां वर्जयेत्कन्यां विवाहसुहृदंबुभम् ।
धनायुः क्षीयते तेजो योऽधिकां वरयेत्स्त्रियम् ॥५९॥
पूर्वपंचकमेकानां शेषद्वययुतं शुभम् ।
भाव्यं षडष्टके नाडी योगो वा गुणसप्तकम् ॥ ६० ॥
तृतीयलाभं कुलवृद्धयेऽपि बंधुर्दशाख्यं धनपुत्रकारि ।
पुंस्त्री मिथः सप्तमकः सुखायुस्तथैकराशेरपि नान्यदोषः ६१

---

१ पुरुषा रविगुरुभौमा नपुंसकाख्यौ बुधार्कपुत्रौ च ।
नार्यौ भृगुचंद्रमसौ ग्रहस्वभावास्त्रिधा प्रोक्ताः ॥ १ ॥

शेषेष्वर्थसुखात्मजाः सुपशवः स्यादेकनाडी न चेद्
दंपत्योर्भगणौ निषिद्धफलदौ वैरं भयोन्योस्तथा ॥८१॥

गदाधरः—

राशिकूटे शुभे लब्धे ग्रहमैत्रीं न चिंतयेत् ।
अलाभे राशिकूटस्य ग्रहमैत्रीं विचिंतयेत् ॥ ८२ ॥

कन्यकाभवनतो वरराशिर्द्वादशाष्टनवमो गुणयुक्तः ।
पाणिपीडनविधौ यदि कुर्यादन्यथा निधनमेति वियोगम् ८३

कन्यर्क्षतो रिष्फनवाष्टमं भं स्याच्चेद्वरस्यार्थसुतायुराढ्यै ।
तद्धेशयोश्चेत्सममित्रवृत्त्योर्मध्यस्थमैत्री च यदाह सत्यः ॥८४॥

षट्काष्टकेऽनपत्यत्वं नवपंचमयोस्तथा ।
नैःस्वं द्विर्द्वादशे प्रोक्तं कन्यादूरं सुशोभनम् ॥८५॥

भोजदेवः—

भवनैकाधिपत्यादौ केऽपीच्छंति करग्रहम् ।
द्विर्द्वादशे त्रिकोणे च न कदाचित्षडष्टके ॥ ८६ ॥

चिंतामणौ—

एकाधिपत्यं ह्युभयोः सुहृत्त्वं नाडी मिथस्तारकशुद्धियुक्तम् ।
विहाय षट्काष्टकमन्ययोः स्यात्पाणिग्रहः सौख्यकरो नृनार्योः ॥

महेश्वरः—

मित्रत्वं ग्रहयोश्च पंचनवमे द्विर्द्वादशे चेद्भवे-
देको वाधिपतिः परस्परशुभा तारा शुभं स्यात्तदा ॥८८॥

वश्याद्यैः पंचभिर्युक्तं गुणैः षट्काष्टकं शुभम् ।
यदि नाडीविशुद्धिः स्यादुद्वाहः सौख्यदस्तदा ॥८९॥

लक्ष्मीधरः—

वश्यं राश्योर्योनिनाडीगणानां
शुद्धा तारा मैत्र्यमेवं मिथः स्यात् ।

एकेशत्वं खेटयोर्वानुकूल्यं
यस्मिन्नार्याः प्राहुरिष्टं षडष्टे ॥ ९० ॥
षट्काष्टकेऽपि कर्तव्यं नृनार्योः पाणिपीडनम् ।
अश्लेषामूलयोः सौम्यस्वात्योः श्रवणसौम्ययोः ॥९१॥
चित्राश्रवणयोश्चेति कैश्चित्प्रोक्तं चतुष्टयम् ।
गुर्वर्केशं कुजैकेशं प्रकर्तव्यं तदा बुधैः ॥ ९२ ॥
मित्रत्वे वश्यत्वे चैकेशत्वे च तारकामैत्र्याम् ।
षट्काष्टकेऽपि कार्यो विवाह इति शौनकेनोक्तम् ॥९३॥

श्रीपतिः—

भवनपतिसुहृत्त्वं स्यात्तथैकाधिपत्यं
यदि भवति न वशित्वं चैकषट्काष्टकेऽपि ।
शुभकृदिह विवाहोऽन्योन्यताराविशुद्धौ
यदि खलु फणिचक्रे स्यान्न नाडीसमाजः ॥ ९४ ॥

व्यवहारसारे—

मित्रता यदि भनाथयोर्द्वयोरेक एव यदि नायको द्वयोः ।
वश्यराशिरपि शुद्धतारका प्राहुरिष्टमषडष्टके शुभम् ॥ ९५ ॥
नाडिवश्यगणयोनितारकाशुद्धिमैत्रखगयोस्तथैकपम् ।
जायते यदि षडष्टके तथा पुंस्त्रियोः खलु चिरायुषे भवेत् ९६
वृषकर्किमीनकन्यावृश्चिकमकराः स्वषष्ठसंयुक्ताः ।
दंपत्योः प्रीतिकराः स्वाष्टमयुक्तास्तु मृतिकरास्तेऽपि ॥९७॥

मुकुन्दः—

मकरसकेसरिमेषयुवत्या तुलसहमीनकुलीरघटी च ।
वृषधनवृश्चिकमन्मथयोगे मृत्युषडष्टकमरणवियोगः ॥ ९८ ॥

लक्ष्मीधरः—

ग्रहमैत्री मिथस्ताराशुद्धिर्नाडी च वश्यता ।
विरुद्धभे वरे दूरे प्रकर्तव्यः करग्रहः ॥ ९९ ॥

वराहमिहिरः—

वर्णो वश्यं तारा योनिग्रहगणभकूटनाडीभिः ।
पाणिग्रहणे प्रोक्तं यथोत्तरं तत्तु बलयुक्तम् ॥ १०० ॥

न वर्णशुद्धिर्न गणो न योनिर्द्विर्द्वादशे चैव षडष्टकेऽपि ।
वरेऽपि दूरे यदि वा त्रिकोणे मैत्री यदि स्याच्छुभदो विवाहः १
द्विर्द्वादशे वा नवपंचमे वा षडष्टके वापि वरेऽपि दूरे ।
गणो न वर्णो नच योनिशुद्धिः स्यात्खेटमैत्र्यां शुभदो विवाहः २

नाडीविचारः—

दास्रर्क्षात्फणिचक्रे त्रिनाडिके नाडिकायोगः ।
दंपत्योर्ऋक्षाभ्यां नाडीयोगे विनिर्दिशेन्मरणम् ॥ ३ ॥

हारीतः—

द्व्यंघ्रिभे त्र्यंघ्रिभे कन्या जाताया गणयेत्क्रमात् ।
वह्निभादिंदुभान्नाडी चतुःपंचसु पर्वसु ॥ १०४ ॥
हीनं षोडशभिर्भेदैर्मध्यमं तु गजेंदुभिः ।
विंशत्यास्तु भवेदूर्ध्वं राशिकूटं शुभं भवेत् ॥१०५॥

वृद्धगर्गः—

जांगले तु चतुर्माला पांचाले पंचमालिका ।
त्रिमाला सर्वदेशेषु विवाहेषु निजं मतम् ॥ १०६ ॥

मुकुंदः—

नाडीयोगे मरणं तद्वत्तु षडष्टके नूनम् ।
जन्मर्क्षे वैधव्यं ग्रहवेधे चोभयं भवति ॥ १०७ ॥

एकेशत्वं खेटयोर्वानुकूल्यं
यस्मिन्नार्याः प्राहुरिष्टं षडष्टे ॥ ९० ॥
षट्काष्टकेऽपि कर्तव्यं नृनार्योः पाणिपीडनम् ।
अश्लेषामूलयोः सौम्यस्वात्योः श्रवणसौम्ययोः ॥९१॥
चित्राश्रवणयोश्चेति केश्चित्प्रोक्तं चतुष्टयम् ।
गुर्वर्केशं कुजैकेशं प्रकर्तव्यं तदा बुधैः ॥ ९२ ॥
मित्रत्वे वश्यत्वे चैकेशत्वे च तारकामैत्र्याम् ।
षट्काष्टकेऽपि कार्यो विवाह इति शौनकेनोक्तम् ॥९३॥

श्रीपतिः—

भवनपतिसुहृत्त्वं स्यात्तथैकाधिपत्यं
यदि भवति न वशित्वं चैकषट्काष्टकेऽपि ।
शुभकृदिह विवाहोऽन्योन्यताराविशुद्धौ
यदि खलु फणिचक्रे स्यान्न नाडीसमाजः ॥ ९४ ॥

व्यवहारसारे—

मित्रता यदि भनाथयोर्द्वयोरेक एव यदि नायको द्वयोः ।
वश्यराशिरपि शुद्धतारका प्राहुरिष्टमषडष्टके शुभम् ॥ ९५ ॥
नाडिवश्यगणयोनितारकाशुद्धिमैत्रखगयोस्तथैकपम् ।
जायते यदि षडष्टके तथा पुंस्त्रियोः खलु चिरायुषे भवेत् ९६
वृषकर्किमीनकन्यावृश्चिकमकराः स्वषष्ठसंयुक्ताः ।
दंपत्योः प्रीतिकराः स्वाष्टमयुक्तास्तु मृतिकरास्तेऽपि ॥९७॥

मुकुन्दः—

मकरसकेसरिमेषयुवत्या तुलसहमीनकुलीरघटी च ।
वृषधनवृश्चिकमन्मथयोगे मृत्युषडष्टकमरणवियोगः ॥ ९८ ॥

संपूज्य ज्यौतिषिकं पृच्छेदथ तेन शास्त्रतो दृष्टम् ।
प्रष्टा निमित्तलग्नादिभिः शुभाशुभफलं वाच्यम् ॥ ३ ॥

जातकनिमित्तशुद्धां शुभलक्षणलक्षितां कुलोद्भूताम् ।
वरयेत्सुतसौख्यार्थी यवीयसीं कन्यकामिष्टाम् ॥ ४ ॥

सुरभिकुसुमगंधैः पूजयित्वा द्विजेंद्रान्
शुभतिथिकरणर्क्षे दैववित्संप्रदिष्टे ।
उभयकुलविशुद्धे ज्ञातिशीलस्वरूपे
प्रथमवयसि दद्यात्कन्यकां यौवनस्थे ॥ ५ ॥

कुलं च शीलं च वपुर्वयश्च वित्तं च विद्या च सनाथता च ।
एते वरे सप्त गुणाः परीक्ष्य देया सुता शेषमचिंतनीयम् ॥ ६ ॥

ज्ञातिर्विद्या वयः शीलमारोग्यं बहुपुत्रता ।
अर्थित्वं वित्तसामर्थ्यमष्टावेते वरे गुणाः ॥ ७ ॥
दूरस्थानामविद्यानां मोक्षधर्मानुवर्तिनाम् ।
शूराणां निर्धनानां च न देया कन्यका बुधैः ॥ ८ ।

नातिदूरे समीपे च नात्याढ्ये नातिदुर्बले ।
वृत्तिहीने च मूर्खे च षट्सु कन्या न दीयते ॥ ९ ।
पूर्वाश्रवणधनिष्ठामित्रानिलवह्निवैश्वदेवेषु ।
कुर्यात्कन्यावरणं वदंति केचिद्विवाहर्क्षे ॥ १० ॥
वपुः शीलं कुलं वित्तं वयो विद्या सनाथता ।
एतानि यस्य विद्यंते तस्मै देया निजा सुता ॥ ११ ।
मूर्खनिर्धनदूरस्थशूरमोक्षाभिलाषिणाम् ।
त्रिगुणाधिकवर्षाणां नापि देया च कन्यका ॥ १२ ।

विवेकविलासग्रंथे—

धीधर्मचतुष्टयगैः सौम्यैः क्रूरैस्त्रिषष्ठलाभगतैः ।
उपचयसंस्थे च गुरौ कन्यावरणं प्रशंसंति ॥ १३ ॥
धीधर्मकेंद्रेषु शुभैरशुभैस्त्र्यायारिगैर्गुरावुच्चे ।
शस्तं कन्यादानं शोभनलग्नादृते विवाहसमम् ॥१४॥

श्रीपतिः—

कन्याप्रदानमाचार्यैर्विवाहसदृशं मतम् ।
विना लग्नगुणैर्नाह वसिष्ठो नारदो मुनिः ॥ १५ ॥

सर्वसंमते—

अभ्यंगेऽपतितेऽक्रूरे स्नाते स्नातामरोगिणीम् ।
तत्कालोपस्थिते कन्यां पिता तुभ्यं प्रदास्यति ॥१५॥
कन्यर्क्षात्पंचमे जीवे नवमे सप्तमेऽर्थगे ।
वामे च सुतसौख्याप्तिरायुरारोग्यसंपदः ॥ १७ ॥

गर्गः—

द्वादशदशमचतुर्थे जन्मनि षष्ठाष्टमे तृतीयेऽपि ।
प्राप्ता पाणिग्रहणं जीवे वैधव्यमाप्नोति ॥ १८ ॥

रवौ गुरौ वा विषमास्पदस्थे स्त्रियो विपर्यस्तफलं लभंते ।
वराड्यलाभे च तथातिकाले पूजाभिषेकैः शुभदो विवाहः १९

मांडव्यः—

जन्मत्रिषष्ठदशमस्थगुरोः सुराणां
कन्यर्क्षतः श्रुतिपुराणविधेस्तु कार्या ।
पूजांत्यरंध्रसुखभे १२।८।४ द्विगुणा विवाहे
कालः स्मृतौ हि कथितो न हि लंघनीयः ॥ २० ॥

कालात्ययान्मंडलभंगभीतेर्वरप्रलोभाव्ययवेश्मगो गुरुः ।
शुभप्रदः स्याद्द्विगुणार्चितोऽसौ न चाष्टमो लक्षगुणैः प्रपूजितः
देवेज्यो यदि शुभदो वर्षे त्वेकादशे च कन्यायाः ।
कथयति यदि वाऽशुद्धिं स भवति वै ब्रह्महा गणकः ॥२२॥

वृद्धगर्गः—

यदा गुरुर्नैधनगो विवाहे सुखार्थलाभाय भवेद्वधूनाम् ।
पूजा यदि स्यात्त्रिगुणा प्रदिष्टा प्रदानतौल्ये च विलग्नगेऽह्नि२३

सर्वसंमते—

व्ययत्रिदिग्बंधुमृतिस्थितोऽपि स्त्रियो धनास्तांकसुतायगैश्चेत्।
विद्धो ग्रहैर्देवपुरोहितश्च शुभप्रदश्चेति वसिष्ठ आह ॥ २४ ॥

विवाहं व्रतबंधं च कुर्यादब्दे सदाष्टमे ।
अत ऊर्ध्वं न शस्तौ तौ तस्माच्छुद्धिरकारणम् ॥२५॥

इति श्रीशार्ङ्गीयसारसमुच्चये विवाहपटले वरणाध्यायो
द्वितीयः समाप्तः ॥ २ ॥

---

॥ नानादोषदेशाचारनिर्णयाध्यायः ॥ ३ ॥

राशिकरणम्—

प्रत्यङ्मुखः सन्विविधैः फलैस्तामभ्यर्च्य तत्र श्रुतिमंत्रपाठैः ।
प्राचीदिगास्यां वरयेत्सुभूषां मंद्राद्यघोषैर्मनुवर्त्मनि स्थः ॥१॥
आरुह्य राशिं शिवतंदुलानामन्योन्यवक्त्राभिविलोकनेन ।
कृत्वांजलिं पूर्णफलाक्षतैश्च पश्चाद्वरं पूर्वत एव कन्याम् ॥२॥

अतिचारविचारः—

वामदेवः—

सर्वे ग्रहा विकृतिनो दद्युः सांसृष्टिकं फलम् ।
अतिचारे च वक्रे च दद्यात्पूर्णं फलं गुरुः ॥ ३ ॥

विवेकविलासग्रंथे—

धीधर्मचतुष्टयगैः सौम्यैः क्रूरैस्त्रिषष्ठलाभगतैः ।
उपचयसंस्थे च गुरौ कन्यावरणं प्रशंसंति ॥ १३ ॥
धीधर्मकेंद्रेषु शुभैरशुभैस्त्र्यायारिगैर्गुरावुच्चे ।
शस्तं कन्यादानं शोभनलग्नादृते विवाहसमम् ॥१४॥

श्रीपतिः—

कन्याप्रदानमाचार्यैर्विवाहसदृशं मतम् ।
विना लग्नगुणैर्नाह वसिष्ठो नारदो मुनिः ॥ १५ ॥

सर्वसंमते—

अभ्यंगेऽपतितेऽक्रूरे स्नाते स्नातामरोगिणीम् ।
तत्कालोपस्थिते कन्यां पिता तुभ्यं प्रदास्यति ॥१५॥
कन्यर्क्षात्पंचमे जीवे नवमे सप्तमेऽर्थगे ।
वामे च सुतसौख्याप्तिरायुरारोग्यसंपदः ॥ १७ ॥

गर्गः—

द्वादशदशमचतुर्थे जन्मनि षष्ठाष्टमे तृतीयेऽपि ।
प्राप्ता पाणिग्रहणं जीवे वैधव्यमाप्नोति ॥ १८ ॥

रवौ गुरौ वा विषमास्पदस्थे स्त्रियो विपर्यस्तफलं लभंते ।
वराद्यलाभे च तथातिकाले पूजाभिषेकैः शुभदो विवाहः १९

मांडव्यः—

जन्मत्रिषष्ठदशमस्थगुरोः सुराणां
कन्यर्क्षतः श्रुतिपुराणविधेस्तु कार्या ।
पूजांत्यरंध्रसुखभे १२।८।४ द्विगुणा विवाहे
कालः स्मृतौ हि कथितो न हि लंघनीयः ॥ २० ॥

लत्ता सुराष्ट्रविषये परिवर्जनीया
हूणे खशे च परिवर्ज्य उपग्रहः स्यात् ॥ १२ ॥

वराहः—

तारावलं माधवमाथुरीया वदंति तारेंदुफलं सुमद्राः ।
सौराष्ट्रिकाः पश्चिमदिक्स्थिताश्च सोमार्कताराप्रभवं वदंति १३

श्रीपतिः—

विरुद्धयोगास्तिथिवारजाता नक्षत्रवारप्रभवाश्च ये स्युः ।
हूणेषु वंगेषु खशेषु वर्ज्याः शेषेषु देशेषु न ते निषिद्धाः ॥१४॥

नक्षत्रवारजा योगास्तिथिवारोद्भवाश्च ये ।
हूणवंगखशेष्वेव वर्जनीयाः सदा बुधैः ॥ १५ ॥

पाराशरः—

वारर्क्षतिथियोगेषु यात्रामेव च वर्जयेत् ।
विवाहादीनि वै कुर्यात् गर्गादीनामिदं मतम् ॥१६॥

वसिष्ठः—

ग्रहर्क्षयोगास्तिथिवारयोगाः शुभाशुभा ये कथिताः प्रभूताः ।
वंगेषु ते प्रोक्तफला भवंति नान्येषु देशेषु विचिंतनीयाः १७

वराहः—

तिथ्युडुदिनपतिजाता दोषास्त्याज्यास्तु, हूणखशवंगे ।
तेऽपि शुभाशुभफलदा न भवंत्यन्येषु विषयेषु ॥ १८ ॥

त्यजंत्येकार्गलं योगमाद्यं पादमथापरे ।
पादवेधं त्यजंत्यन्ये काश्मीरादिषु चापरे ॥ १९ ॥
सर्वदेशे भवेधं तु लत्तां मालवके त्यजेत् ।
एकार्गलं तु सौराष्ट्रे पातं कौसलके त्यजेत् ॥ २० ॥

लत्तां मागधके देशे पातं कौसलके तथा ।
एकार्गलं तु काश्मीरे वेधं सर्वत्र वर्जयेत् ॥ २१ ॥

वामदेवः—

त्यजंत्येकार्गलं दोषं काश्मीरेषु क्वचिज्जनाः ।
हूणे वंगे कलिंगाख्ये ब्रह्मदंडादिकांस्त्यजेत् ॥ २२ ॥

सत्यसूरिः—

उपग्रहेषु ये योगाः कथिताः सूर्यभाद्बुधैः ।
सर्वांस्तान्वर्जयेन्नित्यं खशे वंगे च नान्यतः ॥ २३ ॥

सौराष्ट्रसाल्वेषु च लत्तिकं भं कलिंगबंगेषु च पातितं भम् ।
उपग्रहाख्यं कुरुबाह्लिकेषु त्यजेच्च सर्वत्र सवेधमृक्षम् ॥२४॥

वसिष्ठः—

लत्ता जालंधरे प्रोक्ता पातश्चैव तु कौसले ।
एकार्गलं तु काश्मीरे वेधं सर्वत्र वर्जयेत् ॥ २५ ॥

लक्ष्मीधरः—

लत्तापाताविमौ योगौ विवर्ज्यौ मागधे जने ।
नान्यदेशे मुनिः प्राह वसिष्ठो भगवान्स्वयम् ॥ २६ ॥

शक्तिः—

कंटकं कालवेलां च त्यजेद्बर्बरमालवे ।
उपग्रहं त्यजेद्वंगे बाह्लिके पंचपंचकम् ॥ २७ ॥

वेधभंगः—

लग्ने गुरुः सौम्ययुतेक्षितो वा लग्नाधिनाथो भवगस्तथा वा ।
कालाख्यहोरा च यदा शुभस्य भवेधदोषस्य तदा हि भंगः २८
ये लग्नदोषाः कुनवांशदोषाः पापैर्युता दृष्टिनिपातदोषाः ।
लग्ने गुरुस्तान् विमलीकरोति फलं यथांभः कतकद्रुमस्य २९

कुलधर्मदेशाचारविचारः ।

वामदेवः—

कुले देशे च ये धर्मा न ते शास्त्रदृशा विदा ।
समुल्लंघ्या विवाहादौ स्त्रीवाक्यं न तु लंघयेत् ॥३०॥

श्रीपतिः—

न शास्त्रदृष्ट्या विदुषा कदाचिदुल्लंघनीयाः कुलदेशधर्माः ।
तेषां हि मूलं च्युतवेदशाखा भूयो न धर्मस्थितिभंगदोषात् ३१
शास्त्रस्वरूपं बहवोऽप्यबुध्वा वदंति यच्चानुमतं हितं नः ।
देशं गतो ह्येकविलोचनानां निमील्य नेत्रं निवसेन्मनीषी ३२

वराहः—

देशाचारस्तावदादौ विचिंत्यो देशे देशे या स्थितिः सैव कार्या ।
लोके दुष्टं पंडिता वर्जयंति दैवज्ञोऽसौ लोकमार्गेण यायात् ३३
देशे देशे य आचारः स्थाने स्थाने च या स्थितिः ।
तथैव व्यवहर्तव्यं पारंपर्यात्कुले कुले ॥ ३४ ॥

इति श्रीशार्ङ्गीयसारसमुच्चये विवाहपटले नानादोष-
देशाचारनिर्णयाख्यस्तृतीयोऽध्यायः ॥ ३ ॥

---

चंद्रताराबलाध्यायः ॥ ४ ॥

पाणिग्रहं न शंसंति दंपत्योरष्टमे विधौ ।
द्वादशे वा यतस्तत्र मृत्युरर्थक्षयस्तयोः ॥ १ ॥
यत्र गोचरफलप्रमाणता तत्र वेधफलमिष्यते न वा ।
प्रायशो न बहुसंमतं त्विदं स्थूलमार्गफलदो हि गोचरः ॥२॥
पक्षादिंदुबलं प्रोक्तं यात्रायुद्धादिकर्मणि ।
मुख्यं चन्द्रबलं प्रोक्तं विवाहे शुभकर्मणि ॥ ३ ॥

लत्तां मागधके देशे पातं कौसलके तथा ।
एकार्गलं तु काश्मीरे वेधं सर्वत्र वर्जयेत् ॥ २१ ॥

वामदेवः—

त्यजंत्येकार्गलं दोषं काश्मीरेषु क्वचिज्जनाः ।
हूणे वंगे कलिंगाख्ये ब्रह्मदंडादिकांस्त्यजेत् ॥ २२ ॥

सत्यसूरिः—

उपग्रहेषु ये योगाः कथिताः सूर्यभाद्बुधैः ।
सर्वांस्तान्वर्जयेन्नित्यं खशे वंगे च नान्यतः ॥ २३ ॥

सौराष्ट्रसाल्वेषु च लत्तिकं भं कलिंगबंगेषु च पातितं भम् ।
उपग्रहाख्यं कुरुबाह्लिकेषु त्यजेच्च सर्वत्र सवेधमृक्षम् ॥२४॥

वसिष्ठः—

लत्ता जालंधरे प्रोक्ता पातश्चैव तु कौसले ।
एकार्गलं तु काश्मीरे वेधं सर्वत्र वर्जयेत् ॥ २५ ॥

लक्ष्मीधरः—

लत्तापाताविमौ योगौ विवर्ज्यौ मागधे जने ।
नान्यदेशे मुनिः प्राह वसिष्ठो भगवान्स्वयम् ॥ २६ ॥

शक्तिः—

कंटकं कालवेलां च त्यजेद्बर्बरमालवे ।
उपग्रहं त्यजेद्वंगे बाह्लिके पंचपंचकम् ॥ २७ ॥

वेधभंगः—

लग्ने गुरुः सौम्ययुतेक्षितो वा लग्नाधिनाथो भवगस्तथा वा ।
कालाख्यहोरा च यदा शुभस्य भवेधदोषस्य तदा हि भंगः २८
ये लग्नदोषाः कुनवांशदोषाः पापैर्युता दृष्टिनिपातदोषाः ।
लग्ने गुरुस्तान् विमलीकरोति फलं यथांभः कतकद्रुमस्य २९

स्त्रीणां चंद्रबलं योज्यं ताराबलसमन्वितम् ।
नाधिकारो नराणां च विवाहे गर्भशोधने ॥ १३ ॥

मांडव्यः—

जन्मलग्ने तथांत्ये च मृत्युः सुहृदमानवैः ।
विवाहो नैव कर्तव्यो दंपत्योर्हितमिच्छुभिः ॥ १४ ॥
जन्मलग्ने भवेन्मृत्युरंत्यादिषु यथक्रमम् ।
हानिर्मृत्युस्तथा शोक इति मांडव्यशासनम् ॥ १५ ॥
पाणिपीडनविधेरनंतरं भर्तुरेव बलमैंदवादिकम् ।
पाणिपीडनविधौ निरीक्षयेत्कन्यकासु बलमैंदवं ध्रुवम् ॥१६॥
आधाने संप्रदाने च विवाहे गर्भशोधने ।
स्त्रीणां चंद्रबलं योज्यं न तत्पुंसां कदाचन ॥ १७ ॥
अर्वाग्विवाहकालाच्च पितुश्चंद्रबलं स्मृतम् ।
स्त्रीणां विवाहे सीमंते ग्राह्यमन्यत्र तत्पतेः ॥ १८ ॥
पुंसो न भवनदोषो न चंद्रताराबलं च परियोज्यम् ।
आपरिणयनाद्यस्मात्प्राधान्यं नास्ति पुरुषस्य ॥ १९ ॥

इति श्रीशार्ङ्गीयसारसमुच्चये विवाहपटले चंद्रतारा-
बलाध्यायश्चतुर्थः ॥ ४ ॥

---

## चंद्रयोगाध्यायः ॥ ५ ॥

रविणा दारिद्रवती कुजेन विधवा बुधे च सुतहीना ।
दौर्भाग्यवतीज्ययुते चंद्रे शुक्रेण सह संपन्ना ॥ १ ॥
शनिना प्रव्रजिता स्यात्तमसा परनररता च शिखियुक्ते ।
कापालिनीति केचिद्वदंति शुभमिंदुजेज्ययुते ॥ २ ॥

वामदेवः—

क्रूरखेचरसमन्विते विधौ पीडितं सकलमृक्षमुच्यते ।
तप्तलोहमुदके निवेशितं तापयेन्न खलु किंतु वार्यपि ॥ ३ ॥
द्व्याद्यैः क्रूरैर्मृत्युः प्रव्रजिता स्याच्छुभग्रहैः कन्या ।
यस्मात्तस्माच्चंद्रो लग्ने ग्रहवर्जितः श्रेयान् ॥ ४ ॥

हरिदेवः—

द्विखेटसंयुते मृतिः कुलक्षयस्त्रिपूर्वके ।
निपीडितो भवेद्युतौ ग्रहप्रयोगतः शशी ॥ ५ ॥

श्रीपतिः—

न कुर्वीतास्तगे चंद्रे दुःस्थिते जन्मराशितः ।
क्रूरग्रहयुते तद्वन्मंगलान्यखिलान्यपि ॥ ६ ॥
एकर्क्षफलांशगतो यथोक्तफलदः शशी ग्रहवशेन ।
अन्यर्क्षगतः स्वप्ने मनसापि न भावनां कुरुते ॥ ७ ॥

सत्यसूरिः—

अन्यर्क्षेऽन्यगृहे वा कुजबुधगुरुशुक्रसौरिभिः सार्धम् ।
न भवति दोषाय शशी प्रदक्षिणं याति यदि चैषाम् ॥ ८ ॥

भोजदेवः—

भवंति कालार्धविभागभाजां योगा यथा प्रोक्तफला ग्रहाणाम् ।
अप्राप्त्यतिक्रांतमतः पुनस्ते पाणिग्रहे तेऽप्यफला भवंति ॥९॥

शौनकः—

योगा यथोक्तफलदाः सकलार्धभागैकसंयुतानां तु ।
अप्राप्तातीतानामिच्छामात्रं फलं धत्ते ॥ १० ॥
यथोक्तफलदा योगाः समयार्धविभागिनाम् ।
ग्रहाणां तेऽल्पफलदा गतैष्यसमयस्थिताम् ॥११॥ (?)

ग्रहाहवे सूर्यविधूपमर्दे शृंगाटके धूमशिखोद्गमे च ।
उपप्लवः पाणिभचक्रसंधिः प्राप्ते च पापांतरगे च चंद्रे ॥१२॥

इति श्रीशार्ङ्गीयसारसमुच्चये विवाहपटले चंद्रयोगा-
ध्यायः पंचमः संपूर्णः ॥ ५ ॥

---

## जामित्रविचाराध्यायः ॥ ६ ॥

सप्तर्षयः—

प्राग्लग्नाच्चंद्राद्वा सर्वे जामित्रगा न शुभदाः स्युः ।
तत्रापि केचिदूचुः शुभग्रहा नातिकष्टफलाः ॥ १ ॥
लग्नात्कलत्रगेऽर्के विधवा, चंद्रे सपत्निसंयुक्ता ।
वंध्योपघातसहिता, भौमे सौम्ये प्रजाहीना ॥ २ ॥
जीवे दौर्भाग्यवती, सुभगाऽन्यमते, भृगौ भवेद्वेश्या ।
मंदे त्वनेकगर्भच्युतिर्भवति (?) दुःखान्विता नारी ॥ ३ ॥

श्रीपतिः—

सूर्ये जामित्रगे चंद्रात्प्रमदा भर्तृवर्जिता ।
भवेद्दुश्चारिणी भौमे सोमपुत्रे पतिव्रता ॥ ४ ॥
मानार्थापत्यसौभाग्यसतीत्वैः संयुता गुरौ ।
सापत्न्यकवती शुक्रे दुर्भगा विसुताऽर्कजे ॥ ५ ॥
द्वौ ग्रहौ यदि जामित्रे क्रूरौ सौम्यौ च संस्थितौ ।
अब्दत्रयेण दारिद्र्यं कन्या प्राप्नोति दारुणम् ॥ ६ ॥
लग्नेंदुसंयुतादंशात्पंचपंचाशदंशके ।
ग्रहोऽन्यो यद्यसौ दोषो न गुणैरपि हन्यते ॥ ७ ॥
लग्नाच्छशांकाच्च तदैष्यमंशाद्द्यूनस्थखेटा गतवांशकाद्याः (?)
शरौँब्धियुक्तायुगैँबाणसंख्या जामित्रगं तत्परमं विवर्ज्यम् ८

हरिदेवः—

जामित्रगाद्गगनगाद्धरिजं विधुं वा
शोध्यं कलीकृतमथांबरखाश्वि २०० भक्तम् ।
लब्धाश्च ते नवलवा यदि वेदबाणा
भागे ग्रहो गुणशतं हरिजं विवर्ज्यम् ॥ ९ ॥

यस्मिन्नवांशोपगतः शशांकस्तस्माच्छरप्राणनवांशकेऽन्यः ।
ग्रहः स्थितस्तज्जनितस्तु दोषो हर्तुं न शक्यो हि गुणैरनेकैः ॥

हरिजदिवसचंद्रात्सप्तमः क्रूरदोष-
क्षयकृदमरपूज्यः सोमपुत्रः सितो वा ।
उदयहिबुकधर्मव्योमपुत्रालयस्थो
यदि च सकलदृष्ट्या लोकयन् शीतरश्मिम् ॥११॥

श्रीपतिः—

चंद्रजामित्रगः क्रूरदोषघ्नो ज्ञोऽगिराः सितः ।
धीधर्मखांबुलग्नस्थः पश्यन् पुष्टदृशा विधुम् ॥ १२ ॥

सप्तर्षयः—

शशिजो जामित्रस्थः क्रूरग्रहजनितदोषमपहंति ।
जीवः सौम्योऽपि भृगुस्त्रिकोणकेंद्राश्रितः पश्यन् ॥ १३ ॥

वामदेवः—

सुखत्रिकोणांबरपूर्वलग्नेष्वनीचगाश्चास्तभमत्र पश्यन् ।
जीवः सितो वा शशिजस्तदानीं जामित्रराशिं प्रवदंत्यनिष्टम्

वर्गोत्तमस्थः स्वगृहोच्चसंस्थ-
स्तदंशके वेज्यसितेंदुजानाम् ।
एकोऽप्यमीषां शुभभागगो वा
दृष्ट्वास्तभं तद्दुरितानि हन्यात् ॥ १५ ॥

बृहस्पतिः—

जामित्रं न प्रशंसंति गर्गकाश्यपदेवलाः ।
आयशत्रुतृतीये च धनधान्यप्रदो रविः ॥ १६ ॥
वृद्धपाराशरो मुक्तावल्यां वृद्धगर्गश्च—
यन्महाक्रूरजामित्रदोषोद्भवं......... ।

....................................

क्रूरजामित्रदोषं, नाशयेत्सौम्यजीवास्फुजिल्लग्नपातालगा...
क्रूरजामित्रगं क्रूरलत्ताहतं.............................
दोषान्सहस्रान्विनिहंति शुक्रः......... ॥ १७ ॥

मुक्तावल्याम्—

बुधोऽशीतिशतं जीवः सविंशतिशतं सितः ।
दोषानेते विनिघ्नंति स्वोच्चस्था बलिनो यदि ॥ १८ ॥

सप्तर्षयः—

एकार्गलोपग्रहपातलत्ताजामित्रकर्तर्युदयादिदोषाः ।
लग्नेऽर्कचंद्रेज्यबले विनश्यंत्यर्कोदये यद्वदहो तमांसि ॥१९॥

इति श्रीशार्ङ्गीयसारसमुच्चये विवाहपटले जामित्रविचाराध्यायः समाप्तः ॥ ६ ॥

---

## कर्तरीविचाराध्यायः ॥ ७ ॥

वराहः—

द्वयोश्च पापयोर्मध्ये यदा लग्नं भविष्यति ।
तदा मृत्युं विजानीयात्पंचमेऽब्दे न संशयः ॥ १ ॥

यवनः—

पापद्वयमध्यगतं चंद्रं लग्नं च वर्जयेद्यत्नात् ।
परिणयने वनितानां शतगुणमपि मृत्यवे पुंसाम् ॥२॥

लक्ष्मीधरः—

क्रूरांतस्थो यदा चंद्रो लग्नं वा यदि युज्यते।
शुभेनांतःस्थितो न स्याद्यदि साम्यं न सेवते॥ ३॥

क्रूरमध्यगतलग्नचंद्रयोः सौम्यता यदि न कर्तरी भवेत्।
केचिदूचुरशुभां न कर्तरीं सौम्यखेटयुगमध्यगौ यदि॥४॥

यवनः—

विधोर्धनोपगे शुभग्रहेऽथवांत्यगे गुरौ।
न कर्तरी भवत्यहो जगाद बादरायणः॥ ५॥

बभ्रुः—

क्रूरद्वयस्यांतरगं भवेत्तनु मृतिप्रदं चंद्रमसं च रोगदम्।
शुभैर्धनस्थैरथवांत्यगे गुरौ न कर्तरी स्यादिह भार्गवा विदुः ६

मुकुंदः—

लग्नाद्द्विर्द्वादशे क्रूरौ तुल्यभागत्रयस्थितौ।
तदा कर्तरिजं दोषमन्यथा भावजं फलम्॥ ९॥

श्रीपतिः—

सौम्यग्रहैः शशांकात्केंद्रगतैः सुखवती योषित्।
पाणिग्रहणमवाप्ता क्रूरैरपि कामदुःखार्ता॥ १०॥

गर्गः—

पापैकयुक्ते ग्रहपापविद्धे मध्ये च पापग्रहयोः शशांके।
अब्दैकमध्ये मरणं वरस्य शुभं च जीवज्ञसितेक्षिते च॥११॥

इति श्रीशार्ङ्गीयसारसमुच्चये विवाहपटले कर्तरी-
विचाराध्यायः॥ ७॥

---

## अथ पंचांगशुद्ध्याध्यायः ॥ ८ ॥

अस्तादिनिषेधः—

क्षयमासे दिनपाते धनुषि रवौ भानुलंघिते मासि ।
चक्रिणि सुप्ते कुर्यान्मांगल्यं नो कवीज्यशशिलोपे ॥ १ ॥

असंक्रांतिमासोऽधिमासः स्फुटः स्या-
द्विसंक्रांतिमासः क्षयाख्यः कदाचित् ।
क्षयः कार्तिकादित्रये नान्यथा स्या-
त्तदा वर्षमध्येऽधिमासद्वयं स्यात् ॥ २ ॥

व्रतचौलसुरस्थापनपरिणयनानलगृहालयनिवेशाः ।
भूपाभिषेकयात्राव्रतादि याम्यायनेऽशस्तम् ॥ ३ ॥

गुरुशुक्रास्तविचारः—

विवाहो व्रतबंधो वा यात्रा वा गृहकर्म च ।
गुरावस्तमिते शुक्रे ध्रुवं मृत्युं विनिर्दिशेत् ॥ ४ ॥

नष्टे सुरेज्ये पुरुषस्य नाशः कन्याविनाशो भृगुनंदने स्यात् ।
चंद्रे प्रणष्टे ह्युभयोर्विनाशो भौमेऽष्टमस्थानगते च लग्नात् ॥५॥

बाल्यवार्धक्यविचारः—

अस्तमितौ गुरुशुक्रौ बालौ वृद्धौ च वर्जयेद्यत्नात् ।
बालत्वं वृद्धत्वं सप्तदिनान्तं मुनिभिरुक्तम् ॥ ६ ॥

ज्येष्ठे माघे फाल्गुने मार्गशीर्षे
वैशाखे वा मंगलाढ्यै विवाहः ।
त्यक्त्वा मासौ हीनसंज्ञाधिकाख्यौ
ज्येष्ठं मासं ज्येष्ठयोः पुंस्त्रियोश्च ॥ ७ ॥

त्रिज्येष्ठविचारः—

न ज्येष्ठे ज्येष्ठयोः कार्यं नृनार्योः पाणिपीडनम् ।
तयोरन्यतरे ज्येष्ठे ज्येष्ठमासेऽपि कारयेत् ॥ ८ ॥

शुक्लादितिथिद्वितयं त्याज्यं कृष्णे च पंचतिथयोऽन्त्याः ।
अष्टांशो निंद्याह्वो योगाद्यो भतिथिसंधिश्च ॥ ९ ॥

कन्यावरौ यदि ज्येष्ठौ तयोरेकस्य ज्येष्ठभम् ।
ज्येष्ठाख्यं चेत्तदा ज्येष्ठे मास्युद्वाहस्तयोः शुभः ॥१०॥

बाल्यं वार्द्ध्यं जीवशुक्रोडुपानामस्तं चान्यत्संगमं च ग्रहाणाम् ।
हित्वा तारां सप्तपंचत्रिसंस्थामादेष्टव्यं लग्नमेवं विधिज्ञैः ॥११॥

वार्धक्यमार्यास्त्र्यहमामनंति बालत्वमिंदोश्च तथा निशैकम् ।
सुरासुरेज्यौ हि शुभे विवर्ज्यौ सप्ताहमेवं शिशुवृद्धयोश्च १२

बाले च वार्धके तद्वद्दतुदर्शनजातके ।
द्वादशान्नप्राशने च न मौढ्यं गुरुशुक्रयोः ॥ १३ ॥

नित्ययाने गृहे जीर्णे परिधानेऽन्नप्राशने ।
वधूप्रवेशमांगल्ये न मौढ्यं गुरुशुक्रयोः ॥ १४ ॥

शुक्रेज्यावस्तगौ त्याज्यौ विवाहे मरणप्रदौ ।
बालवृद्धौ तु सप्ताहं निशैकं त्रिदिनं शशी ॥ १५ ॥

मीनस्थेऽर्के जीवे सिंहस्थे वर्जयेत्करग्रहणम् ।
चंद्रार्कग्रहणोत्पातदर्शने सप्तदिवसं च ॥ १६ ॥

सिंहस्थापवादः—

नीचर्क्षस्थे वाक्पतौ शत्रुभे वा
जन्माधीशे नीचगे सूर्यगे वा ।
स्यादुद्वाहो दुःखशोकाय नूनं
पित्र्यर्क्षस्थे वाक्पतौ स्याद्धसुत्वम् ॥ १७ ॥

सप्तर्षयः—

गोदावर्युत्तरतो यावद्भागीरथीतटं याम्यम् ।
तत्र विवाहो नेष्टः सिंहस्थे देवपतिपूज्ये ॥ १८ ॥
पितृभे यदि सुरपूज्यो नीचर्क्षे वाथवाऽरिराशिस्थे ।
कन्योढा वैधव्यं प्रयाति संवत्सरैः षड्भिः ॥ १९ ॥

लल्लः—

गौतमीजाह्नवीमध्ये नोद्वाहो जायते तदा ।
अन्यत्रेष्टप्रदः प्रोक्तो जीवे सिंहस्थिते सदा ॥ २० ॥

पराशरः—

सिंहस्थो देवपूज्यो न भवति शुभदः सर्वमांगल्यकार्ये
यावत्पित्र्ये समग्रे विचरति हि तथा चाद्यभागे च भाग्ये ।
शेषाः सिंहस्य पादाः सुतसुखशुभदा गौतमीजाह्नवीये
तीरे याम्ये च सौम्ये भवति विधनता गंगयोर्मध्यदेशे २१
भागीरथ्युत्तरे तीरे गोदावर्याश्च दक्षिणे ।
विवाहो व्रतबंधो वा सिंहस्थेज्ये न दुष्यति ॥ २२ ॥

सप्तर्षयः—

मीनस्थे पद्मिनीमित्रे सिंहस्थे सुरमंत्रिणि ।
विवाहोपनयौ शस्तौ विंध्यस्योत्तरवासिनाम् ॥ २३ ॥
सिंहस्थितेनापि सुरेंद्रमंत्रिणा विवाहयज्ञोत्सवमंगलादीन् ।
कुर्वीत सिंहांशमतीत्य याम्यदेशेष्वशेषेष्वपि नर्मदायाः २४
सिंहस्थिते देवगुरौ न कुर्याद्विवाहचौलव्रतदीक्षणादीन् ।
यात्राप्रतिष्ठाक्रतुवास्तुपूजा धनुःस्थितेऽर्के झषगे च तद्वत् २५
वैधव्यं तु विवाहेषु जडत्वं व्रतबंधने ।
चूडायां च शिशोर्मृत्युः प्रवेशे च ध्रुवं क्षयः ॥ २६ ॥

त्रिज्येष्ठविचारः—

न ज्येष्ठे ज्येष्ठयोः कार्यं नृनार्योः पाणिपीडनम् ।
तयोरन्यतरे ज्येष्ठे ज्येष्ठमासेऽपि कारयेत् ॥ ८ ॥
शुक्लादितिथिद्वितयं त्याज्यं कृष्णे च पंचतिथयोऽन्त्याः ।
अष्टांशो निंद्याह्वो योगाद्यो भतिथिसंधिश्च ॥ ९ ॥
कन्यावरौ यदि ज्येष्ठौ तयोरेकस्य ज्येष्ठभम् ।
ज्येष्ठाख्यं चेत्तदा ज्येष्ठे मास्युद्वाहस्तयोः शुभः ॥१०॥
बाल्यं वार्द्धं जीवशुक्रोडुपानामस्तं चान्यत्संगमं च ग्रहाणाम् ।
हित्वा तारां सप्तपंचत्रिसंस्थामादेष्टव्यं लग्नमेवं विधिज्ञैः ॥११॥
वार्धक्यमार्यास्त्र्यहमामनंति बालत्वमिंदोश्च तथा निशैकम् ।
सुरासुरेज्यौ हि शुभे विवर्ज्यौ सप्ताहमेवं शिशुवृद्धयोश्च १२
बाले च वार्धके तद्वदृतुदर्शनजातके ।
द्वादशान्नप्राशने च न मौढ्यं गुरुशुक्रयोः ॥ १३ ॥
नित्ययाने गृहे जीर्णे परिधानेऽन्नप्राशने ।
वधूप्रवेशमांगल्ये न मौढ्यं गुरुशुक्रयोः ॥ १४ ॥
शुक्रेज्यावस्तगौ त्याज्यौ विवाहे मरणप्रदौ ।
बालवृद्धौ तु सप्ताहं निशैकं त्रिदिनं शशी ॥ १५ ॥
मीनस्थेऽर्के जीवे सिंहस्थे वर्जयेत्करग्रहणम् ।
चंद्रार्कग्रहणोत्पातदर्शने सप्तदिवसं च ॥ १६ ॥

सिंहस्थापवादः—

नीचर्क्षस्थे वाक्पतौ शत्रुभे वा
जन्माधीशे नीचगे सूर्यगे वा ।
स्यादुद्वाहो दुःखशोकाय नूनं
मित्र्यर्क्षस्थे वाक्पतौ स्याद्बसुत्वम् ॥ १७ ॥

संक्रांतिनिषेधः—

स्यात्संधिकालश्च समादिभोगा-
स्थित्यर्धतस्त्रिंशतिमो विभागः ।
संक्रांतिकालोभयतस्तु तज्ज्ञै-
स्त्याज्याः सदा षोडश एव नाड्यः ॥ ३८ ॥

अर्वाक् षोडशनाड्यः संक्रांतेः पुण्यदा हि परतश्च ।
दानादौ व्रतयात्रापरिणयनादौ विवर्ज्यास्ताः ॥ ३९ ॥

कुलिकादि—

१४ १२ १० ८ ६ ४ २
तिथ्यंशैर्मन्वर्कदिशाष्टांगाब्धियमैरवेः कुलिकाः ।
४ ७ २ ५ ८ ३ ६
व्यर्कैर्निशियुगनगयमशराष्टरामर्तवोऽर्धयामाः स्युः ॥ ४० ॥
दिवा द्वितीये कुलिकोऽर्कजस्य रात्रौ प्रदिष्टः प्रथमः स एव ।
रात्रेः स्थितः पंचदशे विभागे एवं विवर्ज्यं कुलिकत्रयं च ४१

रविवारादि ये प्रोक्ता मुनिभिः कुलिकाः क्षणे ।
तेऽपीह शुक्रवारादि तत्रोपकुलिकाः स्मृताः ॥ ४२ ॥

द्युवारतो जीवशनैश्चरांतं संख्या भवेत्सा द्विगुणा तु कार्या ।
तत्संख्यके रूपलवेऽह्नि रात्रौ व्येके च केचित्कुलिकं वदंति ॥
"यद्द्युचरास्तेषां येऽपि दिवा यथोक्तास्तथैव ते रात्रौ ।
का ऽः कुलिको ज्ञेयः सरोजशंखोक्तवेलायाम् ॥ ४४ ॥
शंखोत्तरार्धाभ्युदये तु वारं त्यजेत्सदा तं कुलिकस्य कालम् ।
न चांद्रपक्षं परिहार्यमार्या जगुरु............... ॥४५॥"?

अर्धयामादि त्रिविक्रमः—

अर्धयामो द्वितीयादि दिवा त्याज्यः सदा बुधैः ।
अर्वाक् त्रिंशत्पलान्येव ह्यर्धयामे त्यजेत्सदा ॥ ४६ ॥

विष्टिस्तु सर्वदा त्याज्या क्रमेणैवागता तु या ।
अक्रमेणागता विष्टिः सर्वकार्येषु शोभना ॥ ४७ ॥
रात्रिभद्रा यदाह्नि स्यादहर्भद्रा यदा निशि ।
तदा सर्वेषु कार्येषु ऋषिभिः शुभदा मता ॥ ४८ ॥

पक्षः समस्तोऽपि शुभः सितोऽत्यं
हित्वा त्रिभागं बहुलोऽपि शस्तः ।
षष्ठ्यष्टमीरिक्ततिथींश्च जह्यान्,
मार्तंडसंक्रांत्ययनर्तुसंधीन् ॥ ४९ ॥

चंद्रबिंबांतरमध्यमार्गाद्यावत्परिक्रामति सोऽस्य कालः ।
यातो यथा स्यादथवा भविष्यस्तावत्फलं········· ॥ ५० ॥

व्यतीपातादि—

व्यतिपातहतं दिनत्रयं व्यतिपातेन समं च वैधृतम् ।
तदपि स्फुटपातदर्शने द्विगुणं तं यदि वा न निश्चितम् ॥५१॥

एष्यो धनं क्षपयति व्यतिपातयोगो
मृत्युं करोति न चिरादपि वर्तमानः ॥
संतापशोकवधबंधभयान्यतीत-
स्तस्माद्दिनत्रयमपि प्रजहीत मर्त्यः ॥ ५२ ॥

विषप्रदग्धेन हतस्य पत्रिणा मृगस्य मांसं च शुभं क्षतादृते ।
यथा तथैव व्यतिपातयोगे क्षणोऽत्र दुष्टो न तिथिर्न वारः ॥

व्याघाते हर्षणे वज्रे विष्कम्भे वैधृते तथा ।
ऐंद्रे सूर्येन्दुपक्रांतिसाम्ये पातस्य संभवः ॥ ५४ ॥
सूर्योदये यथा तारा विनश्यंति समंततः ।
सलिलेन यथा वह्निर्लग्नं वृद्धिक्षये तिथौ ॥ ५५ ॥

त्र्यहस्पृशं नाम यदेतदुक्तमत्र प्रयत्नात्कृतिभिस्तु तज्ज्ञैः ।
विवाहयात्राशुभपुष्टिकर्म सर्वं न कार्यं त्रिदिनस्पृशे तु ॥५६॥

मंगलमध्ये मातूरजसि—

विवाहोत्सवकार्येषु माता चैव रजस्वला ।
वैधव्यं जायते तत्र नृनार्योः पाणिपीडने ॥ ५७ ॥
वधूवरे त्वन्यतरं जननी चेद्रजस्वला ।
तस्याः शुद्धेः परं कार्यं मांगल्यं गुरुरब्रवीत् ॥५८॥

ज्वरादिव्याधौ पराशरः—

न देयं ज्वरिणे लग्नं तेन तत्रैव कारयेत् ।
संपूर्णे तु बले प्राप्ते स्वस्थो धर्मं समाचरेत् ॥ ५९ ॥

वृद्धमांडव्यः—

ज्वरस्योत्पादनं यस्य लग्नं तस्य न कारयेत् ।
दोषापगमनात्पश्चात्स्वस्थो धर्मं समाचरेत् ॥ ६० ॥

भद्रार्धयामकुलिकव्यतिपातो वैधृतं च परिघार्धम् ।
क्रांतिसमत्वं जह्यात्संक्रांतिं क्षयदिनं पित्रोः॥ ६१ ॥

विवाहनक्षत्राणि नक्षत्रविचारश्च.

हस्तोत्तरास्वातिमघानुराधाप्रजेशमूलेंदुभरेवतीषु ।
ऊढा तु सौभाग्यसुखानि कन्या प्राप्नोति शेषेष्वपि भर्तृशोकम्

नक्षत्रशुद्धिपूर्वं लग्नं शंसंति सर्वकार्येषु ।
अविशुद्धर्क्षे लग्नं ग्रहबलयुतमप्यनादेश्यम् ॥ ६३ ॥

वसिष्ठः—

क्रूरविमुक्तं दग्धं क्रूरयुतं ज्वलितधूमितं पुरतः ।
एकशलाकाद्युचरं सवेधमृक्षं विजानीयात् ॥ ६४ ॥

दग्धे सधूमवेधे ज्वलमाने चापि चंद्रनक्षत्रे ।
यात्राप्रवेशमंगलविवाहकार्याणि नेष्यंते ॥ ६५ ॥
क्रूरग्रहविद्धे भे यद्यूढा कन्यका भवति ।
भर्तुर्निधनं कुरुते सापत्न्यं सौम्यविद्धे न ॥ ६६ ॥
निर्घातोल्कामहीकंपग्रहभेदादिदर्शने ।
आपंचवासरादूढा नाशमाप्नोति कन्यका ॥ ६७ ॥
यस्मिन् भे दृश्यते राहुस्तन्नक्षत्रं विवर्जयेत् ।
षण्मासं पाणिसंयोगे यतो वैधव्यता भवेत् ॥ ६८ ॥
क्रूरभुक्तं युतं गम्यं क्रूरलत्तानिपीडितम् ।
दिव्यभौमांतरिक्षोत्थैरुत्पातैर्दूषितं च यत् ॥ ६९ ॥
संध्यागतं ग्रहणगं शिखिना यच्च मर्दितम् ।
राहोर्युद्धहतं चापि नक्षत्रं तद्विवर्जयेत् ॥ ७० ॥

एकार्गलः—

विरुद्धनामयोगेषु साभिजिद्विषमर्क्षगः ।
अर्कादिंदुस्तदा योगो वर्ज्य एकार्गलाभिधः ॥ ७१ ॥
चंद्रभाद्वा समे न स्यान्न शुभः पाणिपीडने ।
संभवोऽर्केंदुदृक्पाताद्गणयेदभिजित्समम् ॥ ७२ ॥ ?

गंडांतम्—

नक्षत्रैस्तिथिभिर्लग्नैर्गंडांतं त्रिविधं मतम् ।
उद्वाहे वर्जयेत्तत्तु कुलांतं तत्र पश्यति ॥ ७३ ॥
गंडांतसंज्ञा त्रिविधा प्रदिष्टा भानां तिथौ राश्युदयांतसंधिम् ।
नवांतपंचांतचतुष्टयांतद्विरेकनाड्यर्धघटीक्रमेण ॥ ७४ ॥
पौष्णाश्व्योरंतरे प्रोक्तमाश्लेषामघयोः पुनः ।
शाक्रनिर्ऋतयोर्मध्ये गंडांतं वेदनाडिकम् ॥ ७५ ॥

रव्यंगारकभास्करिहोरायां करतलग्रहणे ।
दारिद्र्यं धनहानिः कन्यामरणं विजानीयात् ॥ ७६ ॥

क्रूरैर्भुक्तं युक्तं भोग्यं च तथैव राहुखेटयुद्धगतम् ।
ग्रहभिन्नं केतुहतं त्यजेन्महोत्पातदुष्टं च ॥ ७७ ॥

यद्राहुसंदर्शनदुष्टमृक्षं शीतांशुयुक्तेऽथ विलग्नगे वा ।
आमासषट्कं विदधीत तस्मिन्नोद्वाहयात्रादि शुभं शुभार्थी ॥

सप्तर्षयः ( सर्वर्षिः )—

पक्षांतरेण ग्रहणद्वयं स्याद्यदा तदाद्य ग्रहणोपगं भम् ।
पक्षाद्विशुद्धं भवति द्वितीयग्रहोपगं शुध्यति भोगषट्कात् ७९
क्रूराश्रितक्रूरविमुक्तदुष्टग्रहाढ्यधिष्ण्येषु कुमारिकाणाम् ।
वदंति पाणिग्रहणे मुनींद्रा वैधव्यमब्दैस्त्रिभिरत्रिमुख्याः ८०

( वेधविचारः ) श्रीपतिः—

तिर्यक् पंचोर्ध्वगाः पंच द्वे द्वे रेखे च कोणगे ।
ईशद्वितीयरेखातः कृत्तिकादीनि विन्यसेत् ॥ ८१ ॥
भानि प्रदक्षिणं यत्र या रेखा ग्रहसंयुता ।
तस्यां यच्चंद्रसंयुक्तमृक्षं तद्विद्धमुच्यते ॥ ८२ ॥
वैश्वांत्यचतुर्थेऽशे श्रवणादौ नाडिकाचतुष्के च ।
अभिजित्तत्स्थे खेटे विज्ञेया रोहिणी विद्धा ॥ ८३ ॥
चंद्रे वैधव्यमर्केण विद्धेऽपत्यक्षयोऽसृजा ।
बुधेनार्थच्युतिः स्त्रीणां दास्यमंगिरसा भवेत् ॥ ८४ ॥
प्रव्रज्या भृगुपुत्रेण पतित्यागोऽर्कजन्मना ।
राहुणा केतुना चैव गणिकात्वं न संशयः ॥ ८५ ॥

शौनकः—

विद्धं लग्नगतं धिष्ण्यं जन्मर्क्षं लग्नगं तथा ।
सप्तर्षयो जगुर्नेष्टं क्रूरांतस्थश्च शीतगुः ॥ ८६ ॥

भोजदेवः—

विद्धे विलग्ने हिमदीधितौ च किंत्वर्कजोर्वीसुतसैंहिकेयैः ।
परस्परं विग्रहमामनंति क्षपाकरः क्रूरनवांशवर्ती ॥ ८७ ॥

श्रीपतिः—

क्रूरग्रहानुपगतो भगतः स्वकर्म-
सिद्धिं प्रयच्छति हिमद्युतिना समेतः ।
क्रूरग्रहैरुपहतस्तु स योजनीयः
क्रूरेषु कर्मसु शुभेषु विवर्जनीयः ॥ ८८ ॥

वधूप्रवेशे दाने च वरणे पाणिपीडने ।
वेधः पंचशलाकाख्योऽन्यत्र सप्तशलाकजः ॥ ८९ ॥

ऋक्षं सौम्यग्रहैर्विद्धं पादमात्रं परित्यजेत् ।
क्रूरैस्तु सकलं त्याज्यमिति वेधविनिश्चयः ॥ ९० ॥

वेधमाद्यंतयोरंघ्र्योरन्योन्यं द्वितृतीययोः ।
क्रूरैरपि त्यजेत्पादं केचिदूचुर्मनीषिणः ॥ ९१ ॥

नक्षत्राणां चंद्रभोगाच्छुद्धिः—

कृतं भं कर्मसंसिध्यै दोषैरेतैर्यदक्षमम् ।
भुक्त्वा मुक्तं क्षमं तत्स्याद्भानुनाऽमृतरोचिषा ॥९२॥

ब्रह्मगुप्तः—

उत्पातदोषदुष्टं शुभकर्मसु योजयेन्न तावद्भम् ।
यावन्नामृतधाम्ना भुक्त्वा विमलीकृतं भूयः ॥ ९३ ॥

सप्तर्षयः—

दोषैरपरित्यक्तं धिष्ण्यमनिष्टं रवींदुभुक्तमपि ।
दोषविमुक्तं पश्चाद्रवींदुभुक्तं भवेच्छुद्धम् ॥ ९४ ॥

वराहः—

दोषैस्त्यक्तं यदा धिष्ण्यं पश्चाच्चंद्रेण संयुतम् ।
ततः पश्चाद्विशुद्धं भं नान्यथा शुभदं भवेत् ॥ ९५ ॥

द्वाभ्यां धरित्रीतनयेन दुष्टं त्रिभिश्च राहुग्रहणोपयातम् ।
षड्भिश्चतुर्भिः शनिभोगदुष्टं शुद्धं भवेद्भं तुहिनांशुभोगात् ९६

ब्रह्मगुप्तः—

यावन्न भुक्तं रविणाऽत्र धिष्ण्यं शीतांशुना चोत्तरगेण शुक्रे ।
तावत्त्वशुद्धिं समुपैति सम्यगात्मेव दुष्टाश्रयसंप्रयोगात् ९७
भावांशशुद्धोदयमप्यशुद्धं भशुद्धिहीनं प्रवदंति संतः ।
तस्माद्विशेषेण भशुद्धिमादौ विचार्य कार्यं शुभमाहुरार्याः ९८

चंडायुधः—

साध्यहर्षणशूलानां वैधृतिव्यतिपातयोः ।
यद्भं गंडस्य चांते स्यात्तत्पातेन निपातितम् ॥ ९९ ॥

अथ ग्रहणविचारः—

त्रयोदश्यादितो वर्ज्यं दिनानां दशकं ध्रुवम् ।
मांगल्येषु समस्तेषु ग्रहणे चंद्रसूर्ययोः ॥ १०० ॥

भोजदेवः—

राहौ दृष्टे शुभं कर्म वर्जयेद्दिवसाष्टकम् ।
त्यक्त्वा वैतालसंसिद्धिं पापदं भमयं तथा ॥ १ ॥

वृद्धवसिष्ठः—

ग्रहणात्प्राक् परे वर्ज्यास्त्रीणि सप्तदिनानि च ।
विवाहोत्सवमांगल्ये वर्जयेत्तेषु सर्वदा ॥ २ ॥

शौनकः—

विद्धं लग्नगतं धिष्ण्यं जन्मर्क्षं लग्नगं तथा ।
सप्तर्षयो जगुर्नेष्टं क्रूरांतस्थश्च शीतगुः ॥ ८६ ॥

भोजदेवः—

विद्धे चिलग्ने हिमदीधितौ च किंत्वर्कजोर्वीसुतसैंहिकेयैः ।
परस्परं विग्रहमामनंति क्षपाकरः क्रूरनवांशवर्ती ॥ ८७ ॥

श्रीपतिः—

क्रूरग्रहानुपगतो भगतः स्वकर्म-
सिद्धिं प्रयच्छति हिमद्युतिना समेतः ।
क्रूरग्रहैरुपहतस्तु स योजनीयः
क्रूरेषु कर्मसु शुभेषु विवर्जनीयः ॥ ८८ ॥
वधूप्रवेशे दाने च वरणे पाणिपीडने ।
वेधः पंचशलाकाख्योऽन्यत्र सप्तशलाकजः ॥ ८९ ॥
ऋक्षं सौम्यग्रहैर्विद्धं पादमात्रं परित्यजेत् ।
क्रूरैस्तु सकलं त्याज्यमिति वेधविनिश्चयः ॥ ९० ॥
वेधमाद्यंतयोरंघ्र्योरन्योन्यं द्वितृतीययोः ।
क्रूरैरपि त्यजेत्पादं केचिदूचुर्मनीषिणः ॥ ९१ ॥

नक्षत्राणां चंद्रभोगाच्छुद्धिः—

कृतं भं कर्मसंसिध्यै दोषैरेतैर्यदक्षमम् ।
भुक्त्वा मुक्तं क्षमं तत्स्याद्भानुनाऽमृतरोचिषा ॥९२॥

ब्रह्मगुप्तः—

उत्पातदोषदुष्टं शुभकर्मसु योजयेन्न तावद्भम् ।
यावन्नामृतधाम्ना भुक्त्वा विमलीकृतं भूयः ॥ ९३ ॥

अथ लग्नशुद्ध्यध्यायः ॥ ९ ॥

पंचांगशुद्धिः कथितोडुशुद्धिर्विलग्नशुद्धिर्ग्रहभावशुद्धिः ।
समुद्गमास्तांशविशुद्धिराभिः स्यात्पंचभिः शुद्धिभिरिष्टलग्नम् १
लग्नादिभावोपगतैः शुभैः स्यात्पत्युः प्रिया द्रव्यवती गुणाढ्या ।
साध्वी सुपुत्रा हतशत्रुवर्गा सुखोज्झिता नायुरनंतधर्मा ॥२॥
साध्वी धनाढ्या व्ययिनी च शुक्रे तृतीयगे देवररक्तचित्ता ।
षष्ठे महावैरयुता च पत्युः केऽप्याहुरंते शुभदौ सितेज्यौ ॥३॥

वराहः—

त्रिकोणगे स्त्रीजननी शशांके व्याये धनाढ्या सुभगा तृतीये ।
षडष्टलग्नेषु मृतिः कलत्रे सपत्नियुक्तांत्यगृहेषु निःस्वा ॥४॥

सप्तर्षयः—

बंधुस्थाने चंद्रः स्वजनेष्टां बंधुभोगिनीं कुरुते ।
गर्गमते मध्योऽसौ श्रेयान्स्यात्सौम्यदृग्योगात् ॥ ५ ॥

वराहः—

त्रिकोणसप्तमांबरव्ययोपगो विलग्नतः ।
हिमद्युतिः शुभर्क्षगः शुभेक्षितश्च शोभनः ॥ ६ ॥

ब्रह्मगुप्तः—

न यत्र वित्तगः शशी त्रिलाभगोऽथवा भवेत् ।
न लग्नमत्र दापयेदुवाच शौनको मुनिः ॥ ७ ॥

सर्वेषां मते क्रूराणां फलानि—

नष्टासुं विधनां तथा धनवतीं बंध्वग्रवैरान्वितां
निःपुत्रां ससुतां तथा च विधवां रोगोज्झितां पांसुलाम् ।
दुःशीलां सधनां वृथा व्ययवतीं लग्नाच्च पापाः क्रमात्
विक्षीरां हिबुके शनिर्निधनगोऽसृक्स्रावयुक्तां कुजः ॥ ८ ॥

वैधव्यकृद्भवति लग्नगतोऽगनानां
चंद्रान्वितो मरणदोऽस्तगतश्च राहुः ।
केतुश्च मंदवदसौ परतो निरुक्तः
केंद्रस्थितो न शुभ इत्यपरे वदंति ॥ ९ ॥

वराहः—

नष्टे सुरेज्ये पुरुषस्य नाशः कन्याविनाशो भृगुनंदने स्यात् ।
चंद्रे प्रणष्टे ह्युभयोर्विनाशो भौमेऽष्टमस्थानगते च लग्नात् १०

गर्गः—

लग्नाद्भौमेऽष्टमगे पंचत्वं याति दंपती वह्नौ ।
जन्मनि यो वाष्टमगस्तल्लग्नगते तथैव फलम् ॥ ११ ॥
भृगुः षष्ठोऽष्टमो भौमो लग्नस्थोऽपि बृहस्पतिः ।
लग्नात्षष्ठो विलग्नेशो वर्जनीयः सदैव हि ॥ १२ ॥

श्रीपतिः—

आषष्ठतः खनवमायगताश्च सौम्याः
शस्ताः षडायसहजाष्टमभेषु पापाः ।
पाणिग्रहे त्रिसुखलाभधनेषु चंद्रः
षष्ठत्रिगो न शुभ आस्फुजिदष्टमोऽसृक् ॥१३॥

सप्तर्षयः—

जन्मसमये यदुक्तं शुभाशुभं दिव्यदृग्भिराचार्यैः ।
पृच्छापरिणयनाभ्यां तदेव युक्त्या प्रयोक्तव्यम् ॥ १४ ॥

योगजातके—

विनिहंति द्वादशभिर्मासैर्लग्नाधिपः स्थितः षष्ठे ।
मासैश्चर्तुभिरेवं त्वष्टमवर्ती दिनैकेन ॥ १५ ॥

राशिप्रमितैर्वर्षैर्मारयति विलग्नपो रिपुस्थाने ।
मासैर्द्रेष्काणपतिर्दिवसैरंशाधिपो हंति ॥ १६ ॥

लक्ष्मीधरः—

विलग्नाधिपतौ षष्ठे विधवा स्यात्तथांशपे ।
द्रेष्काणाधिपतौ मृत्युर्विलग्ने बलवत्यपि ॥ १७ ॥

सप्तर्षयः—

लग्नाधिपे तु षष्ठस्थे वैधव्यं निश्चितं भवेत् ।
तथाप्यस्तंगते क्षीणे त्रिभिर्वर्षैस्तु मृत्युदः ॥ १८ ॥

वृद्धसप्तर्षयः—

लग्नाधिनाथोऽथ नवांशनाथः षष्ठाष्टमो वा यदि लग्नकाले ।
स्वप्नेऽपि नो पश्यति चात्मनो मुखं विचर्चितं कज्जलकंकुमेन ॥

लघुः—

यत्र लग्नाधिपः षष्ठो रविर्भौमोऽथवा परः ।
तल्लग्नं यत्नतस्त्याज्यं शुभैः सर्वग्रहैरपि ॥ २० ॥
चंद्रे षष्ठाष्टगमे लग्नपतौ वा भवेत्स संवर्तः ।
सर्वशुभयोगनाशं करोति दावाग्निवद्रण्यम् ॥ २१ ॥

लग्नस्य येंऽशा उदिता ग्रहो यस्तेषु स्थितः स्थानफलं स धत्ते ।
यत्स्थानयातः स भवेद्द्वितीयः स्थानेषु शेषेष्वपि चिंत्यमेतत् २२
भावप्रवृत्तौ हि फलप्रवृत्तिः पूर्णं फलं भावसमांशकेषु ।
ह्रासः क्रमाद्भावविरामकाले फलस्य नाशः कथितो मुनींद्रैः २३

ग्राह्या न भावोत्थगुणा विलग्ने
त्याज्याश्च दोषा जगदुस्त्विहैके ।
लग्नांशकेभ्योऽभ्यधिकोऽपि धीस्थः
शुक्रोऽरिगः स्यान्न हि सूर्यजस्तु ॥ २४ ॥

वैधव्यकृद्भवति लग्नगतोंऽगनानां
चंद्रान्वितो मरणदोऽस्तगतश्च राहुः ।
केतुश्च मंदवदसौ परतो निरुक्तः
केंद्रस्थितो न शुभ इत्यपरे वदंति ॥ ९ ॥

वराहः—

नष्टे सुरेज्ये पुरुषस्य नाशः कन्याविनाशो भृगुनंदने स्यात् ।
चंद्रे प्रणष्टे ह्युभयोर्विनाशो भौमेऽष्टमस्थानगते च लग्नात् १०

गर्गः—

लग्नाद्भौमेऽष्टमगे पंचत्वं याति दंपती वह्नौ ।
जन्मनि यो वाष्टमगस्तल्लग्नगते तथैव फलम् ॥ ११ ॥
भृगुः षष्ठोऽष्टमो भौमो लग्नस्थोऽपि बृहस्पतिः ।
लग्नात्षष्ठो विलग्नेशो वर्जनीयः सदैव हि ॥ १२ ॥

श्रीपतिः—

आषष्ठतः खनवमायगताश्च सौम्याः
शस्ताः षडायसहजाष्टमभेषु पापाः ।
पाणिग्रहे त्रिसुखलाभधनेषु चंद्रः
षष्ठत्रिगो न शुभ आस्फुजिदष्टमोऽसृक् ॥१३॥

सप्तर्षयः—

जन्मसमये यदुक्तं शुभाशुभं दिव्यदृग्भिराचार्यैः ।
पृच्छापरिणयनाभ्यां तदेव युक्त्या प्रयोक्तव्यम् ॥ १४ ॥

योगजातके—

विनिहंति द्वादशभिर्मासैर्लग्नाधिपः स्थितः षष्ठे ।
मासैश्चर्तुभिरेवं त्वष्टमवर्ती दिनैकेन ॥ १५ ॥

स्वगृहत्रिकोणतुंगाभिसंस्थितो मित्रभवनभावगतः ।
चेष्टादिबलयुतो वा यत्नाद्योज्यः शुभस्थाने ॥ ३४ ॥
नेष्टः शुभो विलग्ने नीचारिगृहोपगस्तु शत्रुदिने ।
क्रूरोऽपि सुहृद्दिवसे स्वोच्चगतः शुभफलोऽन्येषाम् ॥ ३५ ॥
पापोऽप्यनिष्टदो न स्यादनिष्टस्थानगो यदि ।
शुक्रज्ञगुरुभिर्दृष्टः स्वोच्चधीधर्मकेंद्रगैः ॥ ३६ ॥

भोजदेवः—

उदेति यो दक्षिणमार्गवर्ती सरोजिनीभर्तुरुपैति चास्तम् ।
शुभो विलग्नोपगतः स धत्ते ग्रहो न पाणिग्रहणे शुभानि ३७

अनिष्टफलधामगः शुभकरो ग्रहो वीक्षितो
बृहस्पतिसितेंदुजैर्बलयुतैरपापैर्यदा ।
तनुर्भवति पंचभिर्गगनगैः शुभैः शोभनं
हिमांशुगुरुभास्करैर्विरहितं हितं नो भवेत् ॥३८॥
पंचभिरिष्टैरिष्टं पुष्टमनिष्टैरनिष्टमादेश्यम् ।
स्थानादिबलसमृद्धैश्चतुर्भिरपि पठ्यते यवनैः ॥ ३९ ॥
पंच पाणिग्रहे दोषा वर्जनीयाः प्रयत्नतः ।
दारिद्र्यमृत्युपुंश्चल्यवैधव्यमनपत्यता ॥ ४० ॥
पाणिग्रहे गुणाः पंच यत्नात्तज्ज्ञो विचिंतयेत् ।
उभयोः प्रीतिमायुष्यं धनं पुत्रानरोगताम् ॥ ४१ ॥

जातकेऽपि—

लग्नाधिपोऽतिबलवानशुभैरदृष्टः
केंद्रस्थितैः शुभखगैरवलोक्यमानः ।
मृत्युं विधूय विदधाति सुदीर्घमायुः
सार्धं गुणैर्बहुभिरूर्जितया च लक्ष्म्या ॥ ४२ ॥

सौम्यग्रहैरतिबलैर्विबलैश्च पापै-
र्लग्ने च सौम्यभवने शुभदृष्टयुक्ते ॥
सर्वापदाविरहिता भवतीह कन्या
दोषोज्झितं जगदिवार्कसमुद्गमे स्यात् ॥ ४३

लग्नाधिपो यदा केंद्रे लग्नादुपचये तथा ।
क्रमाच्छुभोऽशुभो ज्ञेयो दोषसंघांश्च घातयेत् ॥ ४४ ॥
प्रस्फुरितकिरणजाले स्निग्धामलमंडले बलोपेते ।
सुरमंत्रिणि केंद्रगते सर्वे दोषाः क्षयं यांति ॥ ४५ ॥

नारदः—

लग्नं लग्नांशनाथो वा आयगः केंद्रगोऽपि वा ।
राशीन्निहंति दोषाणामिंधनानीव पावकः ॥ ४६ ॥
अब्दायनर्तुमासोत्था ये दोषाः पक्षसंभवाः ।
ते दोषा विलयं यांति केंद्रस्थे च बृहस्पतौ ॥ ४७ ॥
लग्नस्थो गुरुरेकोऽपि लग्नदोषस्य संचयम् ।
हंति पापान्हरिदिने चोपवासव्रतं यथा ॥ ४८ ॥
उक्तानुक्ताश्च ये दोषास्तान्निहंति बली गुरुः ।
केंद्रसंस्थः सितो वापि पन्नगान् गरुडो यथा ॥ ४९ ॥
दुःस्थानस्थग्रहकृताः पापभंगसमुद्भवाः ।
ते सर्वे विलयं यांति केंद्रस्थाने बृहस्पतौ ॥ ५० ॥

गर्गः—

सर्वविरुद्धे लग्ने तिष्ठति केंद्रे यदा सुराचार्यः ।
हिमकरदिनकरकिरणैः सर्वे दोषाः प्रलीयंते ॥ ५१ ।
धर्मकर्मांबुधौ लग्ने स्थिते जीवे सिते बुधे ।
अशुभं तच्छुभं याति शुभं वृद्धिमुपैति च ॥ ५२ ।

वराहः—

ये लग्नदोषाः कुनवांशदोषाः पापैः कृता दृष्टिनिपातदोषाः।
लग्ने गुरुस्तान्विमलीकरोति फलं यथांभः कतकद्रुमस्य ॥५३॥
यस्मिन्विवाहे गुरुशुक्रसौम्याः केंद्रस्थिता धर्मसुतस्थिता वा।
सर्वांश्च दोषान्विनिहंति लग्ने कुर्वंति सिद्धिं सुखसंपदायुः ५४

राहुस्त्रिषष्ठलाभे लग्नात्सौम्यैर्निरीक्षितः सम्यक्।
नाशयति सर्वदुरितं मारुत इव तूलसंघातम् ॥ ५५ ॥

॥ नवमांशादिविचारः

प्राग् लग्ने द्विपदगृहे कुर्यादन्यांशकोदयोनांशे ।
द्विपदेष्वपि कन्यातौलिमिथुनधन्वंशकाः शस्ताः ॥५६॥
क्षेत्रेषु मेषमृगतुलाकर्काद्याः स्युर्नवांशकाः क्रमशः।
इष्टांशात्पूर्वंशात् (?) द्विशतगुणा लग्नकालिकास्ते स्युः ५७

ओजेऽर्कचंद्रयोर्होरे युग्मे स्तश्चंद्रभास्वतोः।
आद्यपंचनवेशानां द्रेष्काणाः स्वाद्विपड्लवाः ॥५८॥

यवनः—

आद्यां तु होरां भवनस्य पत्युरेकादशक्षेत्रपतेर्द्वितीयाम्।
स्वद्वादशैकादशराशिपानां द्रेष्काणसंज्ञा यवना वदंति ॥५९॥
कुजयमजीवज्ञसिताः पंचेंद्रियवसुमुनींद्रियांशानाम्।
५।५।८।७।५
विषमेषु समर्क्षेषूत्क्रमेण त्रिंशांशकाः कल्प्याः ॥ ६० ॥

खेटभागास्त्रिभिर्निघ्ना दशभक्ता नवांशकाः।
द्विघ्नाः पंचविभक्ताः स्युः स्वस्थानाद्द्वादशांशकाः ॥६१॥

सप्तर्षयः—

गृहं च होराद्रेष्काणौ नवांशो द्वादशांशकः।
त्रिंशांशो यः शुभो वर्गः सौम्यानामशुभोऽसताम् ॥ ६२ ॥

हरिदेवः—

आदौ समस्तफलदं हरिजं फलार्धं
मध्ये च तुच्छफलमंत्यनवांशकेऽपि ।
अंत्यांशकेऽपि सकलं विफलं विलग्नं
वर्गोत्तमं चरगृहे न चरो नवांशः ॥ ६३ ॥

वर्गोत्तमं विलग्नं वर्गोत्तमजो नवांशको यस्मिन् ।
वर्गोत्तमा नवांशाश्चरादिषु प्रथममध्यांत्याः ॥ ६४ ॥

लघुः—

वर्गोत्तमादृते दद्याच्चरमं न नवांशकम् ।
चरलग्ने तुलांशे तु तुलामकरगे विधौ ॥ ६५ ॥

अस्यापवादो होराप्रकाशे—

चरराशिगते चंद्रे चरलग्ने चरांशके ।
द्वौ पती भजते कन्या शुक्रदृष्टे निशाकरे ॥ ६६ ॥

वराहः—

चरलग्ने चरांशे च चरराशिगतः शशी ।
इत्थं शतगुणं वापि भावशुद्धं तनुं त्यजेत् ॥ ६७ ॥

गर्गः—

कर्कलग्नेऽथवा मेषे तुलांशो यदि दीयते ।
तुले वा मकरे चंद्रो वैधव्यं जायते तदा ॥ ६८ ॥

सप्तर्षयः—

लग्नेंदू चरभवने बलिनो योषिद्ग्रहाः स्थिताः केंद्रे ।
योषिद्ग्रहसंदृष्टे भर्तृबहुत्वं प्रकुर्वंति ॥ ६९ ॥

रविशशीज्ययमाः कुलखेचरा उपकुलाः कुजभार्गवराहवः ।
शशिसुतस्तु कुलोपकुलाभिधोनिगदितोनृपसंधिविधायकः ७०

षड्वर्गतः स्याच्छ्रुतसंपदाप्तिर्लग्ने सुताढ्या खलु पंचवर्गैः।
वर्गैरपि स्याच्छुभदं चतुर्भिस्त्रिंशांशको यस्य शुभग्रहस्य ७१

लघुः—

न लग्नं सच्चतुर्वर्गं दूष्यते कालहोरया।
अपि षड्वर्गसंशुद्धं कुलिकेन विहन्यते॥ ७२॥

ब्रह्मगुप्तः—

न सच्चतुर्वर्गसहो विलग्नं प्रदूष्यते कालजहोरया वा।
न जन्ममासर्क्षदिनर्क्षयोर्वा न चापि पाद्मः कुलिकोदयैर्वा ७३

हरिदेवः—

यस्मिन् राशौ भवेच्चंद्रस्तदंशं परिवर्जयेत्।
यस्माद्भवेच्च वैधव्यमावर्षान्मुनयो जगुः॥ ७४॥

बादरायणः—

राशिवद्वर्जयेत्क्रूरोऽप्यंशस्थो मरणप्रदः।
चंद्रक्रूरयुतो राशिर्लग्नांशं नैव कारयेत्॥ ७५॥

लघुः—यस्मिन् राशौ भवेत्क्रूरो यस्मिन् राशौ तु चंद्रमाः।
द्वावप्यंशौ न दातव्यौ लग्ने तौ मरणप्रदौ॥ ७६॥
यस्मिन् राशौ भवेत्क्रूरस्तदंशो दीयते यदि।
लग्ने मृत्युं विजानीयात्पंचमेऽब्दे न संशयः॥ ७७॥

गर्गः—सक्रूरग्रहराश्यंशं लग्ने दद्यान्न बुद्धिमान्।
यतः सक्रूरराश्यंशादायुर्हीनं प्रजायते॥ ७८॥

जातके—दशमतृतीये नवपंचमे चतुर्थाष्टमेकलत्रे च।
पश्यंति पादवृद्ध्या फलानि चैवं प्रयच्छंति॥ ७९॥

युतः स्वनाथेन निरीक्षितो वा नवांशको लग्नगतो नराणाम्।
निहंति रिष्टानि तथापमृत्युः कलत्रसंस्थश्च नितंबिनीनाम् ८०

वामदेवः—

पश्येद्यदांशाधिपतिर्विलग्नं लग्नेऽथवा स्यादुदयांशशुद्धिः ।
अस्तांशनाथः स्मरभं विलग्नात्पश्येत्तदास्तांशविशुद्धिरुक्ता ८१

अस्यापवादः । वृद्धगर्गात्रेयादयः—

शुद्धस्त्विह स्यान्न यदोदयांशो लग्ने न चास्तांशमुपैति सिद्धिः ।
तयोः सुहृत्सौम्यनिरीक्षितो यः शुभाय स स्यात्प्रवदंति संतः ॥

वृद्धवसिष्ठः—

उदयास्तांशयोः शुद्धिर्यदि लग्नेन जायते ।
तदा तन्मित्रसौम्याढ्यवीक्षितोंऽशः शुभो भवेत् ८३

सप्तर्षयः—

उदयास्तविशुद्धं चेद्दंपत्योर्लग्नमायुषे वृद्ध्यै ।
उदयास्तविशुद्ध्यूनं मरणकरं निश्चितं वर्ज्यम् ॥ ८४ ॥

श्रीपतिः—

पाणिग्रहे लग्नगतो नवांशः स्वस्वामिना चेन्न युतो न दृष्टः ।
करोति पुंसामचिरेण मृत्युं तद्वत्कलत्रोपगतोंऽगनानाम् ८५

सप्तर्षयः—

कृत्वायनांशयुक्तौ लग्नार्कौ निशि च भार्धमितम् ।
रविभोग्यांशैर्गुणितं निजोदयाल्लग्नभुक्तांशैः ॥ ८६ ॥
खगुणहृतात्पलयोगो मध्योदयसंयुतो भवेत्कालः ।
एकर्क्षगार्कतन्वोर्विवरांशैः साध्यते कालः ॥ ८७ ॥
उत्तरदक्षिणचरलवहीनयुतानाडिका रवेरुदयात् ।
प्राक्पश्चाद्देशांतरयोजनखाष्टांशकेनापि ॥ ८८ ॥
द्विगुणाः पंचविभक्ता रविसितबुधचंद्रमंदगुरुभौमाः ।
दिनपाद्या होरेशा विवर्जयेत्पापखगहोराम् ॥ ८९ ॥

लग्नफलं नवभागे वारफलं व्योमगः स्वहोरायाम् ।
यच्छेत्फलं नवांशे नवांशके खेचरः पश्येत् ॥ ९० ॥

लघुः—वारफलं होरायां लग्नफलं चांशके विनिर्दिष्टम् ।
अंशस्थोऽप्यंशपतिर्यस्माच्चिंत्यं प्रयत्नेन ॥ ९१ ॥

भानोः कुजस्य च दिने विगुणा दरिद्रा
सौख्यान्विता भवति चंद्रदिने कुमारी ।
सौभाग्यशीलसहिता हि शशांकसूनो-
र्वारे गुरोः सुखवती सुभगा सुपुत्रा ॥ ९२ ॥

प्रीत्यर्थभोगसुखभाग्भृगुजाह्नि नीच-
स्थैर्यान्वितार्कजदिने पतिवल्लभा च ।
केऽप्याहुरिंदुदिवसे सहिता सपुत्रा
स्याद्दुर्भगा शनिदिने पतिवर्जिता च ॥ ९३ ॥

तिथिरेकगुणा प्रोक्ता बलेन द्विगुणः क्षयः ।
चतुर्गुणं तु नक्षत्रं वासरः षड्गुणः स्मृतः ॥ ९४ ॥
चंद्रः शतगुणो लग्ने सहस्रगुणमुच्यते ।
लग्नाद्धोरादयो भेदा बलिनः स्युर्यथोत्तरम् ॥ ९५ ॥

"योगाः"

ये जातके नृपतिनाभसशीतरश्मे-
र्योगा वसिष्ठयवनप्रमुखैर्निरुक्ताः ।
सर्वेऽपि ते करतलग्रहणे कुमार्या
योज्या यतः शुभफलाः प्रसवे विवाहे ॥९६॥

नंदो भद्राभिधो जीवो जीमूतः स्थावरो जयः ।
विजयो व्यालपातालसुखक्षयतमोऽतकाः ॥ ९७ ॥

बुधे नंदः, सिते भद्रो, जीवे जीवो, विलग्नगे ।
ज्ञजीवयोस्तु जीमूतः, स्थावरो जीवशुक्रयोः ॥ ९८ ॥
जयो ज्ञसितयो, र्ज्ञेज्यशुक्रेषु विजयो, भवेत् ।
सहस्रकिरणे व्यालो, रसातलसुखः कुजे ॥ ९९ ॥
क्षयो मंदे, तमो राहौ, केतावंतकसंज्ञकः ।
द्वादशैते स्मृता योगाः शुभाशुभफलप्रदाः ॥ १०० ॥
त्रिष्वाद्येषु भवेद्राज्ञी ततो देवी चतुर्ष्वपि ।
दरिद्रा विधवा सौख्या व्यालाद्येष्वथ पंचसु ॥ १ ॥

अन्ये ये यवनाद्युक्ताः करग्रहे ये शुभाशुभा योगाः ।
जातकविहिताभूपाकृतिपूर्वाश्चात्र संचिंत्याः ॥ २ ॥
एवं गुणदोषाणां बलाबलं समधिकल्पयित्वादौ ।
लग्नं विवाहसमयोदयं च होराविदा स्पष्टम् ॥ ३ ॥
नहि सकलगुणसमेतं कालेनाल्पेन लभ्यते लग्नम् ।
यस्मात्तस्माद्देयं तनुदोषं बहुगुणं तज्ज्ञैः ॥ ४ ॥

शौनकस्तु विशेषमाह—

बहुतरगुणसंयुक्तं तनुना दोषेण दूषितं लग्नम् ।
दैवज्ञद्विजवचनात्तदेव संवर्धयत्यायुः ॥ ५ ॥

जातके गर्गः—

स्वल्पोऽप्यनर्थकृद्दोषो लग्ने बहुगुणो भवेत् ।
तोयबिंदुरिवासंघः समृद्धः कृष्णवर्त्मनि ॥ ६ ॥

अथ दैवज्ञलक्षणम् । वृद्धगर्गः—

उभयकुलविशुद्धः प्रसन्नमूर्तिः क्रियागमे शुद्धः ।
सद्भाववान्प्रगल्भो दैवज्ञस्तादृशो भवति ॥ ७ ॥

अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते ।
स पंक्तिदूषकः पापो ज्ञेयो नक्षत्रपाठकः ॥ ८ ॥

वेदशास्त्रविहीनाश्च हेतुतर्कविवर्जिताः ।
तेभ्यो लग्नं न गृह्णीयाद्विषसंयुक्तदुग्धवत् ॥ ९ ॥

न वेत्ति यो जातककर्मपद्धतिं
न ब्रह्मसिद्धांतभवानपि ग्रहान् ।
विवाहयात्रादिककालसूचको
ज्ञेयोऽपि मृत्युः खलु तत्स्वरूपधृक् ॥ १० ॥

संशोध्य लग्नं सुपरीक्षितं च ददाति लोके स च वल्लभः स्यात् ।
विस्तारमायाति च तस्य कीर्तिर्यथा जले तैलमिव प्रकीर्णं ११

वसिष्ठोऽपि—

लग्नदातरि संतुष्टे दुर्लग्नेऽपि सुलग्नता ।
असंतुष्टे त्वसंतुष्टा निर्दहंत्यपमानिताः ॥ १२ ॥

यात्राधिकारदशकं गणितं च वेत्ति
होरांगतंत्रकुशलो व्यवहारदर्शी ।
सम्यग्विवाहपटलार्थविदप्रमादी
दातुं द्विजोऽर्हति स एव सतां विलग्नम् ॥१३॥

अन्यत्रापि—दशाधिकारं यो वेत्ति जातकं वेत्ति तत्त्वतः ।
व्यवहारे सुकुशलो लग्नं दातुं क्षमो भवेत्॥१४॥

अथ गोरजलग्नविचारः तत्र वसिष्ठः—

न गोरजो यावदुपैति शांतिं न तारकाज्योतिरिनांशुसंघात् ।
विवाहकालो गदितस्तु तावद्विजातिवर्णत्रयबाह्यकेन(कस्य)॥

बुधे नंदः, सिते भद्रो, जीवे जीवो, विलग्नगे ।
ज्ञजीवयोस्तु जीमूतः, स्थावरो जीवशुक्रयोः ॥ ९८ ॥
जयो ज्ञसितयो, र्ज्ञेज्यशुक्रेषु विजयो, भवेत् ।
सहस्रकिरणे व्यालो, रसातलसुखः कुजे ॥ ९९ ॥
क्षयो मंदे, तमो राहौ, केतावंतकसंज्ञकः ।
द्वादशैते स्मृता योगाः शुभाशुभफलप्रदाः ॥ १०० ॥
त्रिष्वाद्येषु भवेद्राज्ञी ततो देवी चतुर्ष्वपि ।
दरिद्रा विधवा सौख्या व्यालाद्येष्वथ पंचसु ॥ १ ॥
अन्ये ये यवनाद्युक्ताः करग्रहे ये शुभाशुभा योगाः ।
जातकविहिताभूपाकृतिपूर्वाश्चात्र संचिंत्याः ॥ २ ॥
एवं गुणदोषाणां बलाबलं समधिकल्पयित्वादौ ।
लग्नं विवाहसमयोदयं च होराविदा स्पष्टम् ॥ ३ ॥
नहि सकलगुणसमेतं कालेनाल्पेन लभ्यते लग्नम् ।
यस्मात्तस्माद्देयं तनुदोषं बहुगुणं तज्ज्ञैः ॥ ४ ॥

शौनकस्तु विशेषमाह—

बहुतरगुणसंयुक्तं तनुना दोषेण दूषितं लग्नम् ।
दैवज्ञद्विजवचनात्तदेव संवर्धयत्यायुः ॥ ५ ॥

जातके गर्गः—

स्वल्पोऽप्यनर्थकृद्दोषो लग्ने बहुगुणो भवेत् ।
तोयबिंदुरिवासंघः समृद्धः कृष्णवर्त्मनि ॥ ६ ॥

अथ दैवज्ञलक्षणम् । वृद्धगर्गः—

उभयकुलविशुद्धः प्रसन्नमूर्तिः क्रियागमे शुद्धः ।
सद्भाववान्प्रगल्भो दैवज्ञस्तादृशो भवति ॥ ७ ॥

वसिष्ठः—

कुलिकं क्रांतिसाम्यं च मूर्तौ षष्ठाष्टमे शशी ।
पंच गोधूलिके त्याज्यास्त्वन्ये दोषाः शुभावहाः॥२४॥

अन्यत्रापि—

धिष्ण्यं क्रूरयुतं पापं लग्ने षष्ठाष्टमे शशी ।
गोरजं तत्प्रशंसंति संतः शनिदिनं विना ॥ २५ ॥

वृद्धगर्गः—

क्रूरभुक्तं च भोग्यं च विद्धं भं क्रूरवासरम् ।
लग्नं क्रूरयुतं चांशं संध्यालग्ने न चिंतयेत् ॥ २६ ॥
यदृक्षं शनिभौमाभ्यां युक्तं वा धूमितं भवेत् ।
गोधूलिकेऽपि तद् ग्राह्यं हित्वा वेधं मनीषिभिः॥२७॥
लग्नशुद्धिर्यदा न स्याद्यौवनं च प्रदृश्यते ।
तदा च सर्ववर्णानां लग्नं गोधूलिकं शुभम् ॥ २८ ॥

पराशरः—

यावत्कुंकुमरक्तचंदननिभः संदृश्यते भास्करो
यावन्नैव निशा न चापि दिवसः संध्या भवेत्पश्चिमा।
यावन्नोडुगणो न खे विसृमरो नोन्मीलिता रश्मय-
स्तावत्सर्वजनस्य मंगलविधौ गोधूलिकं शस्यते ॥२९॥
गोपैर्यष्ट्या हतानां खुरपुटदलिता या च रेणुर्दिनांते
सोद्वाहे सुंदरीणां विपुलधनसुता चायुरारोग्यदा स्यात्।
तस्मिन्काले न ऋक्षं न च तिथिकरणं नैव लग्नं न योगः
ख्यातः पुंसां सुखार्थं शमयति दुरितं गोरजं यद्दिनांते ३०
यावद्दिनांते निशि पश्चिमायां पश्चात्तृतीये रविबिंबभागे ।
तस्मात्परं नाडिकया च युग्मे गोधूलिकालं मुनयो वदंति ३१

रत्नमालायाम्—

समस्तगुणसंपदां न खलु लब्धिरल्पैर्दिनै-
गुणप्रचुरता ततो बहुमता च दोषाल्पता ।
न भूरि गुणसंचये प्रभवतीह दोषोऽल्पको
ह्युदर्चिषि हुताशने सलिलबिंदुरेको यथा ॥ ३२ ॥

अन्यत्रापि—

घटिकालग्नाभावेंऽगीकार्यं गोरजं विप्रैः ।
.................................... ॥ १३३ ॥

इति शार्ङ्गीयसारसमुच्चये विवाहपटले लग्नशुद्धिप्रकरणाध्यायः समाप्तः ॥ ९ ॥

---

अथ प्रकीर्णाध्यायः ॥ १० ॥

मंडपवेदिकामाह—

हस्तोन्नतां हस्तकपंचसप्तकूर्मोन्नतां मंदिरवामभागे ।
स्तंभैश्चतुर्भिः कलशैर्विचित्रैर्वेदीं विवाहे प्रवदंति तज्ज्ञाः ॥१॥
दलनकंडनमण्डपवेदिकागृहसुमार्जनवारकमंडपाः ।
करतलग्रहमध्यगतागतं तदखिलं विदधीत विवाहभे ॥ २ ॥

आशाधरः—

विवाहकृत्यं सकलं विवाहभे विलोकयेन्नात्र बलं हिमद्युतेः ।
नवत्रिषष्ठोऽत्र न वारकः शुभो न वर्णको नैव विवाहमंडपः ३

"एकादि नव तैलादि षष्ठं नेष्टं तृतीयकम् ।
अष्टसप्तचतुःपंच विवाहे मंडपाः शुभाः ॥ ४ ॥
निष्किंचने ह्यहैकं च तैलं वा मृन्मयः शुभः ।
कार्यस्थे राज्यविस्तारे मंडपो माससंज्ञितः ॥ ५ ॥

चतुः पंच तथा सप्त अष्टमैकादशस्तथा।
विवाहे मंडपाः प्रोक्ता द्विरेकः स्यान्न किंचन ॥६॥" १

गर्गोऽपि—

चतुर्थो मंडपः श्रेष्ठः पंचमः सप्तमस्तथा।
अष्टमैकादशः श्रेष्ठो नेष्टः षष्ठस्तृतीयकः ॥ ७ ॥
उक्ते काले विवाहानां कुर्यान्नान्दीमुखं पिता।
देशांतरे विवाहश्चेत्तत्र गत्वा भवेदिदम् ॥ ८ ॥
व्यवधाने महानद्या गिरेर्वा व्यवधानतः।
वाचो यत्र विभिद्यंते तद्देशांतरमुच्यते ॥ ९ ॥
पंचमे नवमयुग्मचतुर्थे सप्तमेऽह्नि च शचीप्रपूजनम्।
पाणिपीडनदिनादिपूर्वकं यत्प्रसिद्धमिह संज्ञया भवेत् ॥१०॥
तैलप्रवाहो नोल्लंघ्यो न दिनादौ नृयोषितोः।
वैधव्यं मुनिभिः प्रोक्तं तथैवांगिरसः स्मृतिः ॥११॥
तैलं देवप्रतिष्ठार्थं कुमार्याश्च महोत्सवे।
विप्रस्योपनये चैव तैलमादौ प्रधार्यते ॥ १२ ॥
प्रतिष्ठाचौलोपनये विवाहे नरयोषितोः।
तैलं प्रयत्नतो धार्यं सर्वदेशेष्वयं विधिः ॥ १३ ॥
तैलाद्देवत्वमायाति प्रेतत्वं याति तैलतः।
तस्मात्तैलं विधार्यं स्याद्विवाहे च प्रतिष्ठितम् ॥१४॥
सुतैलेन विना लग्नं यः करोति स मूढधीः।
प्रेतात्प्रेतः समुत्पन्नो वरत्वं च प्रमुंचति ॥ १५ ॥

रत्नकोशे—रजनिजनितरागा मालिनी पूर्ववक्त्रा
प्रथमरजनियामेऽलंकृताभ्यो रमाभ्यः।

शिरसि विमलतैलं धारयेद्वै कुमारी
धवललुलितरागैर्नागवल्लीदलैश्च ॥ १६ ॥
अंत्यजश्वानचांडालोदक्यापतितसूतिकाः ।
दर्शनं स्पर्शनं वर्ज्यं धृते तैले तु कन्यया ॥ १७ ॥

सर्वसंमते—

विस्तारतो हस्तचतुष्टयेन हस्तोच्छ्रितां मंदिरवामभागे ।
स्तंभैश्चतुर्भिः कृतनिश्चलांगां वेदीं विवाहे प्रवदंति तज्ज्ञाः१८
विवाहवेदी गृहमंडपस्य ईशानपूर्वोत्तरदिग्विभागे ।
सौभाग्यकन्याधनपुत्रयुक्ता शेषैर्विभागैर्विधवा भवंति ॥१९॥
दक्षिणे पूर्वदिग्द्वारे तत्पूर्वोत्तरमादिशेत् ।
गृहनिर्गमवामांगे वसोर्द्वारं च वेदिकाम् ॥ २० ॥
ऊषरे दुर्भगा नारी शल्ये चैव मृतप्रजा ।
द्वारवेधेऽनपत्या च सूत्रच्छेदे कुलक्षयः ॥ २१ ॥
गृहस्य दक्षिणे भागे कुर्याद्वेदीं ततः शुभाम् ।
अन्यथा नैव कर्तव्या सेत्येवं मनुरब्रवीत् ॥ २२ ॥
अविघ्नकारिणं देवं विघ्नराजं प्रपूजयेत् ।
समोदकाक्षतैः पूर्णं दंपत्योः सन्निधौ न्यसेत् ॥ २३ ॥
षोडशारत्निकं कुर्याच्चतुर्द्वारोपशोभितम् ।
मंडपं तोरणैर्युक्तं तत्र देवीं प्रकल्पयेत् ॥ २४ ॥
अष्टहस्तं च रचयेन्मंडपं वा द्विषट्करम् ।
चतुःकरां वा हस्तोच्चामिष्टकाभिर्मृदाऽथवा ॥ २५ ॥
विप्रे षोडशहस्तैश्च राजन्ये द्वादशैस्तु तैः ।
वसुहस्तमितो वैश्ये शूद्रजातौ चतुःकरः ॥ २६ ॥

गृहे तु पश्चिमे द्वारे तथैवोत्तर एव च।
विवाहे वेदिका कार्या गृहान्निर्गमदक्षिणे ॥ २७ ॥

"अथ श्वशुरादीनां सुखं भविष्यति नवेति ज्ञानोपायः"

श्रीपतिः—श्वशुरोऽर्कः सितः श्वश्रूः स्त्रीणामस्तपतिः पतिः।
एभिरुच्चोपगैरेषां शुभं नीचादिगैरसत् ॥ २८ ॥

ब्रह्मगुप्तस्तु विशेषमाह—

सूर्यात्पतिः स्त्री च विधोस्तथाराद्वित्तं सुतो ज्ञाच्च सुखं गुरोश्च।
धनं सितादर्कसुताच्च वेश्म ब्रूयात्समुद्वाहविधौ स्वयुक्त्या २९

एतैर्नीचस्थितैरस्तंगतैः शत्रुगतैर्न सत्।
स्वगृहोच्चत्रिकोणस्थैः शुभं तेषां तथोदितैः ॥ ३० ॥

अथ घटिकास्थापनं तत्फलं चाह—

यंत्राणां मुख्यरूपासि ब्रह्मणा निर्मिता घटी।
दंपत्योः शुभकालाप्तिं कुरु त्वं सृष्टिकारिके ॥ ३१ ॥
प्रस्तुत्यैवं घटीं नीरे क्षिपेत्कुंडे जले शुभे।
अर्धोदितार्धास्तमिते सूर्यबिंबेऽद्रिसंगते ॥ ३२ ॥

शौनकः—

यद्रूपं प्रथमं करोति घटिका पूर्वादिदिक्षु क्रमा-
त्सौभाग्यं निधनं च गोविरहिता रोगोद्गमः सर्वदा।
धन्या वल्लभतामुपैति नियतं पत्युश्चला सर्वदा
स्यात्साध्वी सुतवित्तबंधुसहिता नंदत्यलं भूतले ॥३३॥

दिनापरार्धे च कपाटसंधौ न वैधृते न व्यतिपातयोगे।
क्रांत्योश्च साम्ये कुलिकार्धयामे करग्रहः स्याद्विषभक्षतुल्यः३४
न दिवा पराह्णसमये नाधिकमासे करग्रहो न तिथिपाते।
ग्रहणद्वयमध्यगते ग्रहणादौ सप्तवासरैः परतः ॥ ३५ ॥

शिरसि विमलतैलं धारयेद्वै कुमारी
धवललुलितरागैर्नागवल्लीदलैश्च ॥ १६ ॥
अंत्यजश्वानचांडालोदक्यापतितसूतिकाः ।
दर्शनं स्पर्शनं वर्ज्यं धृते तैले तु कन्यया ॥ १७ ॥

सर्वसंमते—

विस्तारतो हस्तचतुष्टयेन हस्तोच्छ्रितां मंदिरवामभागे ।
स्तंभैश्चतुर्भिः कृतनिश्चलांगां वेदीं विवाहे प्रवदंति तज्ज्ञाः १८
विवाहवेदी गृहमंडपस्य ईशानपूर्वोत्तरदिग्विभागे ।
सौभाग्यकन्याधनपुत्रयुक्ता शेषैर्विभागैर्विधवा भवंति ॥१९॥
दक्षिणे पूर्वदिग्द्वारे तत्पूर्वोत्तरमादिशेत् ।
गृहनिर्गमवामांगे वसोर्द्वारं च वेदिकाम् ॥ २० ॥
ऊषरे दुर्भगा नारी शल्ये चैव मृतप्रजा ।
द्वारवेधेऽनपत्या च सूत्रच्छेदे कुलक्षयः ॥ २१ ॥
गृहस्य दक्षिणे भागे कुर्याद्वेदीं ततः शुभाम् ।
अन्यथा नैव कर्तव्या सेत्येवं मनुरब्रवीत् ॥ २२ ॥
अविघ्नकारिणं देवं विघ्नराजं प्रपूजयेत् ।
समोदकाक्षतैः पूर्णं दंपत्योः सन्निधौ न्यसेत् ॥ २३ ॥
षोडशारत्निकं कुर्याच्चतुर्द्वारोपशोभितम् ।
मंडपं तोरणैर्युक्तं तत्र देवीं प्रकल्पयेत् ॥ २४ ॥
अष्टहस्तं च रचयेन्मंडपं वा द्विषट्करम् ।
चतुःकरां वा हस्तोच्चामिष्टकाभिर्मृदाऽथवा ॥ २५ ॥
विप्रे षोडशहस्तैश्च राजन्ये द्वादशैस्तु तैः ।
वसुहस्तमितो वैश्ये शूद्रजातौ चतुःकरः ॥ २६ ॥

न मुंडनोपनायनं न मेखलाविमोक्षणम् ।
वदंति शौनकादयः सचौलकर्म मुंडनम् ॥ ४७ ॥
न मुंडनं स्याद्व्रशनादिबंधो न चापि मोक्षो व्रतबंधनस्य ।
वदंति गर्गप्रमुखा मुनींद्राः शूद्राकृतिं (?)मुंडनमेव नान्यत् ४८
स्वसृद्वये भ्रातृयुगे स्वसृभ्रातृयुगे तथा ।
न जातु मंगलं कुर्यादेकस्मिन्मंडपेऽहनि ॥ ४९ ॥
मातृयज्ञक्रियापूर्वं ज्येष्ठं कृत्वा तु मंगलम् ।
ऋतुत्रयं पुनर्यावन्न कुर्याल्लघु मंगलम् ॥ ५० ॥
विवाहकृत्यं दुहितुश्च कृत्वा पश्चाद्विवाहो न सुतस्य कार्यः ।
प्रकीर्तयंत्येवमृषिप्रवर्या न मुंडनं चापि हि मंडनादनु ५१
दर्शश्राद्धं क्षयश्राद्धं शीताद्भिः स्नानमेव च ।
प्राचीनावीतिकरणं नदीसीमानुपातनम् ॥ ५२ ॥
नांदीश्राद्धे कृते नैव यावन्मातृविसर्जनम् ।
नदीप्रवाहो नोल्लंघ्यो न दिनादौ न योषिताम् ॥५३॥
वैधव्यं मुनिभिः प्रोक्तं तथैवांगिरसः स्मृतिः ।
पाणिपीडनविधेरनंतरं चूलिकोपनयने विवर्जयेत् ।
मासषट्कमुपरागभं त्यजेन्न्यूनमृक्षमपि पादभेदतः ५४
ज्येष्ठात्कृत्याच्च षण्मासं न कुर्याल्लघुमंगलम् ।
कुर्वंति मुनयः केचिदन्यस्मिन्नपि वत्सरे ॥ ५५ ॥
स्त्रीविवाहः कुले निर्गमः कथ्यते
पुंविवाहः प्रवेशो बुधैः कीर्तितः ।
निर्गमादादितो न प्रवेशः शुभ-
स्तत्र संवत्सरांतो विधिः कीर्तितः ॥ ५६ ॥

ऊर्ध्वं विवाहाच्छुभदो नरस्य
नारीविवाहोऽपि ऋतुत्रये स्यात् ॥
नारीविवाहादपि हि प्रशस्तं
नरस्य पाणिग्रहमाहुरार्याः ॥ ५७ ॥
अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥ ५८ ॥
प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिता पिबति शोणितम् ॥५९॥
अकीर्तिं भुवि संप्राप्य वसंति निरये यतः ।
प्राप्नुवंति नराः पापं परदाराभिदर्शनात् ॥ ६० ॥
मातापिताग्रजो भ्राता बांधवाः सहवासिनः ।
सर्वे ते नरकं यांति दृष्ट्वा कन्यां रजस्वलाम् ॥६१॥
पितृगेहे च या कन्या रजः पश्यत्यसंस्कृता ।
ब्रह्महत्या पितुस्तस्याः सा कन्या वृषली भवेत् ॥६२॥

इति शार्ङ्गीयसारसमुच्चये विवाहपटले प्रकीर्णाध्यायः समाप्तः ॥ १० ॥

---

## कार्तिकीविवाहपटलम् ।

शौनकादिमुनयस्तु पुष्करे कार्तिकीकरतलग्रहं शुभम् ।
कीर्तयंति धनपुत्रकीर्तिदं दीर्घमायुरमरेज्यताखिलम् ॥ १ ॥
पद्मयोनिरपि कार्तिकी सदा माघमासकृतदारसंग्रहः ।
सृष्टिकर्तुरपि वांछिताखिलं नात्र विष्टिकुलिकादि चिंतयेत् २
ब्रह्मविष्णुशिववासवादिभिर्दत्तशोभनवरा हि कार्तिकी ।
तत्र पाणितलपीडने कृते पुत्रवित्तसुखभाग्भवेज्जनः ॥ ३ ॥

नैव गोचरविधिर्न चाष्टकः शोधयेन्न बलमर्कजीवयोः ।
तारकाशशभृतोर्बलं शुभं नैव लग्नविधिमत्र चिंतयेत् ॥ ४ ॥
भार्गवामरगुरोरदर्शने दुष्टदोषपरिदूषिते दिने ।
कार्तिके सकलदोषनाशनं कारयेत्करतलग्रहं बुधः ॥ ५ ॥

पूर्वतः पृष्ठतो वापि कार्तिक्यां दिनपंचकम् ।
विवाहं तत्र कुर्वीत नात्र कार्या विचारणा ॥ ६ ॥
कुर्याद्गोधूलिकं लग्नं कार्तिक्यां शुभमिच्छता ।
सर्वदोषापहं प्रोक्तं दैवज्ञैः पूर्वसूरिभिः ॥ ७ ॥
कार्तिक्यां घटिकालग्नं कुर्यादज्ञानतोऽपि यः ।
कर्ता कारयिता चोभौ निहतौ सकलैः सुरैः ॥ ८ ॥
नष्टे शुक्रे तथा जीवे ग्रहणे चंद्रसूर्ययोः ।
केशवस्थितिनंदायां विवाहः शोभनः स्मृतः ॥ ९ ॥
इक्षुसान्निध्य आरामे प्रसिद्धे देवकीर्तने ।
नदीह्रदतडागे वा विवाहः पुष्करे स्मृतः ॥ १० ॥

॥ इति श्रीमांडव्यसंहितायां कार्तिकीविवाहपटलं समाप्तम् ॥

---

## ॥ मौंजीपटलम् ॥

जनुर्गर्भतो वाष्टमेऽब्देबटोः स्याद्व्रतं माघतः पंचमासेषु शुक्ले ।
गुरौजन्मभाच्छोभनेभेऽष्टमाब्दाद्वरं मध्यमंनिन्दितं वर्षमुक्तम्

दिने नापराह्णे प्रदोषे कुजार्की-
विना प्रोक्तधिष्ण्येऽप्यनध्यायहीने ।
दिने पूर्वके पश्चिमे वा शुभं स्या-
दवेधे त्रिधोत्पातके सप्तरेखात् ॥ २ ॥

तथा क्रूरयुक्तेष्वयातर्क्षवर्ज्ये
बटोर्मृत्युदे नो शुभं मंगलं स्यात् ।
ऋगीशः सुरेज्यो यजुर्वेदसाम्नोः
पती भार्गवारौ बुधोऽथर्वनाम्नः ॥ ३ ॥
बलाढ्येऽधिपे वास्य होरादिवर्गे
शुभं मेखलाबंधनं नाधिके तत् ।
करत्रिश्रवःसार्परौद्रर्क्षपूर्वा-
त्रये मूलभे बह्वृचानां शुभं स्यात् ॥ ४ ॥
गुरुब्राह्मयसूर्यादितींद्वर्क्षपौष्णा-
नुराधोत्तराख्यो यजुःसौख्यकारी ।
करे वासवे विष्णुभे पुष्यरौद्रो-
त्तरादस्रभे वै श्रियः सामगानाम् ॥ ५ ॥
श्रवःपुष्यमैत्राश्विहस्तेंदुभेषु
व्रतं सप्तमे भे शुभेऽथर्ववेदे ।
गुरुर्भार्गवश्चंद्रजः सूर्यनामा
तथेंदुः शुभो वासरो मौंजिबंधे ॥ ६ ॥
नवांशोऽर्कतः क्रौर्यजाड्ये भवेतां
तथा पापिता पाटवं यज्वता च ।
तथा यज्वता मूर्खताऽथ प्रसंगाद्
ब्रुवे केंद्रगानां फलं स्पष्टमत्र ॥ ७ ॥
सुरेज्ये धनी पुण्यकृत्सौख्यविद्या-
गुणाढ्यो भृगौ तद्वदेवाथ सौम्ये ।

सदाध्यापकः सूर्यजेंऽत्यादिसेवी
रवौ राजसेवी कुजे शास्त्रवृत्तिः ॥ ८ ॥
वणिग्वृत्तिरिंदौ रविः षट्[६]त्रि[३]लाभे[११]
रिपु[६]त्र्य[३]ाय[११]गा राहुभौमार्कपुत्राः ।
तप[९]स्त्र्या[३]य[११]धी[५]लोचने[२]ऽब्जोऽर्थ[२]धर्मे[९]-
शौ[५]राय[११]त्रिषु[३] ज्ञेज्यशुक्राः शुभाः स्युः ॥ ९ ॥
भ[११]वा[६]यग्निके[३]ऽऽनुः शुभं तून शुक्रो
न षष्ठः[६] शुभो मृत्युरिष्फ[१२]स्थितोऽपि ।
तथा लग्नपेंदू षडष्टस्थितौ नो
शुभौ देवपूज्योऽपि पूज्यो न मृत्यौ ॥ १० ॥
न लग्ने कुजार्कार्कयो राहुकेतू
बटोर्जीवनं दीर्घकालं सहंते ।
न मंदापराह्णाधिमासेषु कंठ-
ग्रहो देववंद्ये स्थिते सिंहराशौ ॥ ११ ॥
न संध्याभवे गर्जिते नष्टसंस्थे
गुरौ नीचगे चारिराशिस्थिते वा ।
दिनत्र्यंशशस्तं तृतीयं त्वशस्तं
द्विजानामिदं मौंजिबंधे विधेयम् ॥ १२ ॥

इति श्रीकेशवार्कविरचितं मौंजीपटलं समाप्तम् ॥



तथा क्रूरयुक्तेष्वयातर्क्षवर्ज्ये
बटोर्मृत्युदे नो शुभं मंगलं स्यात् ।
ऋगीशः सुरेज्यो यजुर्वेदसाम्नोः
पती भार्गवारौ बुधोऽथर्वनाम्नः ॥ ३ ॥
बलाढ्येऽधिपे वास्य होरादिवर्गे
शुभं मेखलाबंधनं नाधिके तत् ।
करत्रिश्रवःसार्परौद्रर्क्षपूर्वा-
त्रये मूलभे बह्वृचानां शुभं स्यात् ॥ ४ ॥
गुरुब्राह्मयसूर्यादितींद्वर्क्षपौष्णा-
नुराधोत्तराख्यो यजुःसौख्यकारी ।
करे वासवे विष्णुभे पुष्यरौद्रो-
त्तरादस्रभे वै श्रियः सामगानाम् ॥ ५ ॥
श्रवःपुष्यमैत्राश्विहस्तेंदुभेषु
व्रतं सप्तमे भे शुभेऽथर्ववेदे ।
गुरुर्भार्गवश्चंद्रजः सूर्यनामा
तथेंदुः शुभो वासरो मौंजिबंधे ॥ ६ ॥
नवांशोऽर्कतः क्रौर्यजाड्ये भवेतां
तथा पापिता पाटवं यज्वता च ।
तथा यज्वता मूर्खताऽथ प्रसंगाद्
ब्रुवे केंद्रगानां फलं स्पष्टमत्र ॥ ७ ॥
सुरेज्ये धनी पुण्यकृत्सौख्यविद्या-
गुणाढ्यो भृगौ तद्वदेवाथ सौम्ये ।

नेष्टं नाडीवेधे चान्ये प्राहुः पादानां वेधे
हीनेऽनासन्ने वेधे सर्वाभिर्मैत्रीभिः सौख्यम् ॥ ३ ॥

गणमैत्री—

सौख्यं दंपत्योः अस्वारेहाश्वादित्येज्यान्वब्जं ।
देवे, चित्रावस्वैंद्रंमूशाग्नींद्राग्नीमव्यालम् ॥
दैत्ये, ऽन्यन्मर्त्ये, पुंदैत्यानां मृत्युः स्या,दैत्यानां
वैरं देवैः, स्त्रीभं ना भर्तुभं रक्षस्तत्रेष्टम् ॥ ४ ॥

नक्षत्रयोनिः—

तत्रेष्टं चेन्नाड्यां योनौ शुद्धिः खेटप्रीतिः स्या-
च्चाश्वेभाजाहिव्यालश्वानौत्वव्योतुब्र्याखवब्र्याः ॥
काली द्वीपी काली व्याघ्रव्येणश्वानः कीशो द्वौ ।
बभ्रू कीशः सिंहाश्वौ सिंहो गौर्हस्तीयं योनिः ॥ ५ ॥

योनिमैत्री, वर्गमैत्री—

योनिः श्रेष्ठा स्याच्चान्योन्यं वैरं त्यक्त्वा वर्गः स्यात् ।
कुश्चौतुश्चुः सिंहश्चुः श्वानस्तुर्व्यालः पुश्चाखुः ॥
यादेरेणः शोऽविश्चावर्गस्तार्क्ष्य,स्तार्क्ष्यव्यालं, ।
पंचास्यैणं,श्वानाव्योत्वाखु त्याज्यं नित्यं वैरम् ॥६॥

ग्रहमैत्री, वर्णमैत्री—

वैरं त्याज्यं खेटानां दंपत्योर्जन्मन्यन्योन्यं ।
मीनादेराशेर्विप्राद्याश्चत्वारो वर्णा ज्ञेयाः ॥
वा विप्रादेः शुक्रेज्यावीशौ भौमार्काबब्जो ज्ञ-
श्चैनिः संकीर्णस्येयं मैत्री भर्तृश्रैष्ठ्ये सौम्या ॥ ७ ॥

कन्यादूरं, तारामैत्री—

सौम्यं कन्यर्क्षाद्वा नुर्भं दूरं व्यस्तं न श्रेष्ठं ।
भीरोर्भात्ताराः शस्ता हित्वा पंचर्षीदुत्र्याख्याः ॥
श्रेष्ठा जन्माख्या दंपत्योस्त्यक्त्वैकर्क्षं चैकांशे ।
चेत्कन्योत्पत्तौ रव्याद्याश्चाशस्ता न स्युः सर्वे ॥ ८ ॥

वश्यमैत्री, गुरुशुद्धिः—

सर्वे नृणां वश्याः सिंहं हित्वा तेषां भक्ष्याः स्यु-
स्तोयोत्पन्नाः कूर्पिं त्यक्त्वा सर्वे वश्यास्त्वेणारेः ॥
एवं दिग्भिर्मैत्री चिंत्या कन्योक्ते काले जीवे ।
बुद्ध्यां द्रव्ये लाभे धर्मे मार्गे चोद्वाहो रम्यः ॥ ९ ॥

प्रश्नद्वारा शुभाशुभफलं, पुंस्त्रियोर्लक्षणम्—

रम्यस्थाने दैवज्ञं संपूज्य प्रष्टार्थं विप्रं ।
पृच्छेत्तेन प्रश्नाद्यैः श्रेष्ठैः श्रेष्ठं संवक्तव्यम् ॥
भर्ता धर्मस्वायुर्विद्याढ्यो व्याधित्यक्तः श्रेष्ठः ।
कन्या जन्माद्यैः शुद्धा सच्चिह्ना लध्वी वैवाह्या ॥१०॥

कन्यादानकालः—

वैवाह्ये भे कन्यादानं केचित्पूर्वास्वाग्नेये ।
विष्णोर्भे राधायां वैश्वस्य त्रिष्वंशेषु प्राहुः ।
स्वातौ वस्वर्क्षे लग्नं त्यक्त्वात्रान्ये दोषा वर्ज्याः
सौम्यैर्धीगोकेंद्रस्थैः क्रूरैस्त्र्ययायस्थैः श्रेष्ठम् ॥ ११ ॥

वर्षशुद्धिः—

श्रेष्ठा आद्याः षट्पक्षा युग्मेऽब्दे कन्या जन्माहा-
च्चौजेऽब्दे ते नो शस्ता व्यस्ता नृणां वर्षे ज्ञेयाः ॥

खेटाब्दश्रैष्ठ्ये सौख्यं हैन्ये कष्टं खेटे वाब्दे
ह्येकस्मिन् शुद्धे मध्यं खेटे शुद्धे वर्षं शस्तम् ॥ १२ ॥

गुरुशुद्धौ विशेषः—

शस्तो देवेज्यः पूर्णं सौभाग्यं कुर्यात्कन्यानां ।
जन्मत्र्यर्याकाशस्थः पूजाद्यैः शस्तोऽब्दे शुद्धे ॥
रिष्फांबुस्थः खेटैर्विद्धो रेखाशुद्धो वा मध्यः ।
स्वोच्चादिस्थो वा कालेऽतीते तच्छुद्धिर्नो चिंत्या॥१३॥

तारावलं चंद्रबलम्—

नो चिंत्यं तारावीर्यं शुक्ले पक्षे कृष्णे चांद्रं ।
दंपत्योः शश्वद् ग्राह्यं चांद्रं चांद्राभावे स्त्रीणाम् ॥
शुद्धे लग्ने राश्युत्थं चांद्रं वीक्ष्यं भर्तुः सौरं ।
चोद्वाहाद्धर्तुश्चांद्रं हित्वा सीमंतं वा यात्राम् ॥ १४॥

विवाहांगकार्यम्—

यात्रामुद्वाहापौर्णे जीवेच्छुर्नो कुर्वीतावाक् ।
त्र्यर्यैकाहस्वाद्याचार्यैर्वर्णाद्यं कार्यं वर्ज्यम् ॥
वैवाह्यं कृत्यं वैवाह्यर्क्षे वा कन्यादानर्क्षे ।
कर्तव्यं कर्तुश्चंद्रे शुद्धे नो विष्ट्यादौ दोषे ॥ १५ ॥

लग्नशुद्ध्यै त्याज्यदोषाः—

दोषास्त्याज्या लग्ने पंचांगाशुद्धिः क्रांत्योः साम्यं ।
क्रूरैर्विद्धं युक्तं भुक्तं गम्यं भं यद्राहुस्थम् ॥
भानोर्भादिंद्राख्यं गंडांतं यामार्धं शन्यर्धं ।
लत्ताशर्वास्त्रं खार्जूरं संक्रांतिः क्रूरा होरा ॥ १६ ॥

गुरोर्नीचादिविचारः—

क्रूरा होरा दुष्टा क्रूरे वारेऽह्नि स्यादुल्काद्यैः ।
दुष्टं भं तावत्त्याज्यं यावच्चंद्रेणाभुक्तं स्यात् ॥
नीचस्थो नीचांशे जीवो वर्ज्यः सिंहे वा वक्री ।
चातीचार्यह्नामष्टाविंशत्यां वा गोतौलिस्थः ॥ १७ ॥

वृषतुलागतगुरोर्व्यवस्था, ग्रहयुक्तचंद्रफलं, कर्तरी,—

गोतौलिस्थो वर्ज्यो निंद्ये देशे नान्यस्मिन् जीवः ।
चंद्रः खेटैर्युक्तो नेष्टः सौम्येज्याभ्यां श्रेष्ठः स्यात् ॥
लग्नाभावे चैकर्क्षांशं हित्वा श्रेष्ठो वा स्याच्चेत् ।
खेटानां प्रादक्षिण्यं प्राप्तश्च क्रूरांतर्नेष्टः ॥ १८ ॥

चंद्र-लग्न—कर्तरीविचारः—

क्रूरांतर्नेष्टं लग्नं वित्ते मार्गी रिप्फे वक्री ।
क्रूरः सेष्टस्तन्मध्यं विच्छुक्रेज्यैर्दृष्टं वा स्यात् ॥
लग्नेंदुभ्यां षड्भाढ्याभ्यां तुल्यः सत्खेटो नेष्टो ।
द्यूने क्रूरः शश्वच्चाब्जांशाद्बाणेष्वंशे त्यक्तः ॥ १९ ॥

गुरुशुक्रचंद्राणामस्तादि, बाल्यत्व, वृद्धत्व, जन्ममास, नक्षत्रतिथीनां वर्ज्यत्वं प्रथमगर्भस्य ज्येष्ठमासवर्ज्यत्वम्—

त्यक्ताः सर्वैः शुक्रेज्याब्जा अस्तं यातास्ते बाला ।
वृद्धाश्च स्युर्बाल्यं वृद्धत्वं सप्ताहं चाशाहम् ॥
चंद्रस्यैकं त्रिद्युः स्याज्जन्मर्क्षं मासोऽहर्नेष्टम् ।
चाद्योत्पत्त्योः स्त्रीन्रोर्ज्येष्ठो नेष्टः स्याच्चांद्रो मासः २०

सौरादिमासज्ञानं, प्रकारांतरेण जन्ममासादीनां वर्ज्यत्वम्—

मासः सौरो जन्माख्यो यद्राशौ सूर्ये जन्मासौ ।
चांद्रे पक्षौ व्यस्तौ श्रेष्ठौ वाह्न्येवं वा जन्मर्क्षे ॥
केचित्प्राहुश्चान्यैर्जन्मद्यूर्ध्वं मासो नेष्टः स्या-
दुक्तश्चैवं यज्जन्मर्क्षं वा जन्माहो लग्नं वा ॥ २१ ॥

मासानां फलम्, एकादिज्येष्ठविचारः—

वा मासो नेष्टः पौषश्चैत्रः स्याच्चैत्रः पौषो वा ।
जीवक्षेत्रार्कं चाद्यं पक्षं हित्वोद्वाहे चारुः ॥
माघाद्वौ वैशाखाद्वावाषाढस्य त्र्यंशः स्त्रीन्रो- ।
श्चैकज्येष्ठं स्याद् द्विज्येष्ठं मध्यं त्रिज्येष्ठं त्याज्यम्२२

क्षयमासाधिकमास, दक्षिणायननिषेध, कार्तिकीलग्नविचारः—

त्याज्यं हीनाधिक्यं मासो याम्ये चार्कस्तत्रोर्जे ।
कार्तिक्याः प्राग् वा पश्चात्पंचाहानि श्रेष्ठानि स्युः ॥
संध्यालग्नेऽत्राद्यैर्ये दोषास्ते वर्ज्या देवाग्रे ।
रम्ये स्थाने कालेऽतीते कार्यं वा वैवाह्यर्क्षे ॥ २३ ॥

विवाहनक्षत्राणि—

वैवाह्यर्क्षाण्याहुर्मूलो मैत्रं पैत्र्यं ब्राह्माद् द्वे ।
स्वात्याहिर्बुध्न्याद् द्वे वैश्वं पादोनं चार्यम्णो द्वे ॥
वैश्वांत्यो भागस्तिथ्यंशो विष्णोर्भस्य द्वाविंशं ।
नक्षत्रं तत्रस्थैः खेटैः स्यात्प्राजापत्यं विद्धम् ॥ २४ ॥

नक्षत्रवेधः—

विद्धं सौम्यस्थैर्विश्वं पौष्णस्थैश्चोफा यामस्थैः ।
मैत्रं श्रस्थैः पित्र्यं हस्तस्थैश्चोभा ग्रस्थैः स्वाती ॥

मूलस्थैरादित्यं भं क्रूरैः कृत्स्नं त्याज्यं सौम्यैः ।
पादः स्याद्वेधश्चाद्याऽन्त्ययोरंत्ययोर्द्व्यंत्ययोरन्योन्यम् २५

पादवेधः, ग्रहणनक्षत्रत्याज्यत्वम्—

अन्योन्यं वेधस्त्याज्यो नाडीलत्ताद्येषु स्याद्वा ।
यस्मिन् भे ग्रासः स्यात्तत्त्याज्यं चाषण्मासं नेष्टाः ॥
घस्राः स्वर्ग्रासे पूर्णे पादोने खंडेऽग्रावल्पे ।
ग्रासे चान्वष्टौ सप्तेष्वऽध्यग्म्यब्जाः प्राक् तत्खंडम् २६

त्याज्ययोगाः, क्षयाह, विष्टि, निशीथ, मध्याह्ननिषेधः—

खंडं वाद्यत्र्यंशो ह्येकोने विंशे योगे वर्ज्यौ ।
गंशूवव्यान्त्याद्येष्वाद्या नाड्यः षट्पंचांकांकाः ॥
षट् तिस्रो वर्ज्याः स्युर्वैव्यौ कृत्स्नौ पित्रोर्नाशाहो ।
विष्टिर्मध्याह्ने घट्यात्र्यंशो वा रात्र्यर्धे निंद्यः ॥२७॥

देशपरत्वे निंद्ययोगानां परिहारः, वृद्धिक्षयतिथिदग्धतिथि, मीनार्क-त्याज्यत्वम्—

निंद्या योगा वारर्क्षाह्नां योगे ये चार्यैरुक्ता ।
यस्मिन् यस्मिन् देशे तस्मिन् तस्मिन् देशे ते वर्ज्याः ॥
मृत्याख्या योगा यात्रादौ वर्ज्याः स्युर्नोद्वाहादौ ।
वृद्ध्याख्यं हीनाख्यं दग्धाहश्चार्को मीने वर्ज्यः ॥२८॥

क्रांतिसाम्य, (व्यतीपात-वैधृति)गंडांत-विचारः—

वर्ज्यौ द्वौ पातौ वैव्यौ चंद्रार्यम्णोः क्रांत्योः साम्ये ।
चक्रे भार्द्धे भाहर्लग्नैर्गंडांतं त्रेधं नेष्टम् ॥
पौष्णाश्विन्योरश्लेषापित्रोश्च ज्येष्ठानिर्ऋत्यो- ।
र्मध्यं नाडीवेदाख्यं वेदार्धं पूर्णाद्योस्तिथ्योः ॥ २९ ॥

लग्नगंडांतं, वर्षादेः संधिकालनिषेधः—

तिथ्यंते भांते योगांते वादौ घट्येका नेष्टा ।
मीनाव्योर्नाडी गंडांतं तन्मेषात्तुर्ये तुर्ये ॥
शेषेषु स्यान्नाड्याः षष्ठांशो वर्षादेः षष्ठ्यंशः ।
संधेः कालो वा हीनः संधेः संधिः सर्वैर्नेष्टः ॥ ३० ॥

प्रहरार्ध–कुलिकादिज्ञानम्—

नेष्टास्तिग्मांशोर्वेदाग्न्यश्वीष्वष्टाग्न्यंगाख्यास्ते ।
यामार्धाश्चाह्नि स्युस्तिथ्यंशैः शन्यर्धं वर्ज्यं स्यात् ॥
मन्वर्काशेभांगाब्धिद्व्याख्यैर्व्यर्कैं रात्रौ लत्ता ।
राह्वर्काराार्किभ्यो विंशार्काग्नीभेष्वृक्षेषु स्यात् ॥ ३१ ॥

हरायुधपातैकार्गलसंक्रांतिकालवर्जनम्—

ऋक्षं यत्सार्गंशूवैर्व्यैंद्राणां योगानामंते ।
तत्रस्थे चंद्रे पातोऽसौ वर्ज्योऽथो निंद्ये योगे ॥
सूर्यर्क्षात्सद्वाविंशर्क्षोऽजस्थोऽब्जो नेष्टो भानोः ।
संक्रांतेश्चाहस्त्वन्यैः प्राक्पश्चाद्भूपाख्या नाड्यः ३२

कालहोरा–वारप्रवृत्तिः—

नाड्यो वारप्राप्तेर्द्विघ्ना बाणाप्ता होराधीशाः ।
वाराधीशाद्या भास्वच्छुक्रज्ञाब्जैनीज्याराः स्युः ॥
साहर्यामिन्यर्धे सार्धैंद्राभिर्नाडीभिर्युक्ते ।
नाडीतिथ्यंशैः संयुक्ताभिर्वाराप्तिः शश्वत्स्यात् ॥३३॥

देशाचारविचारः—

शश्वच्चिंत्या देशाचारा यस्मिन् देशे ये धर्माः ।
ते नो वर्ज्या भाद्रस्याद्यायां दिक्तिथ्यां कौंडिन्यः ॥

तज्जानामुद्वाहं श्रेष्ठं स्मार्हैवं कश्चिन्मार्गे ।
मासे कस्मिँश्चिद्देशे तौ संस्मर्येते नो अन्यैः ॥ ३४ ॥

षड्वर्गानयनम्—

अन्ये ये दोषा नोक्तास्ते लोकाद्द्रष्टव्याश्चाथो ।
मंशुर्ज्ञश्चंसूर्यौ ज्ञः शुमंजीशौ सौरिर्जीवः ॥
मेषादीशास्ते चांशेशाश्चौजे सूर्येंद्वोर्होरे ।
युग्मे चंद्रार्यम्णोर्द्दृष्काणाश्चाद्येष्वंकेशानाम् ॥ ३५ ॥
अंकांशानां मेषश्चैणास्यस्तौली कर्कश्चाद्याः ।
अर्कांशाः स्वात् ज्ञेयाः शुक्रज्ञेज्यैन्यारांशा युग्मे ॥
पंचाद्र्यष्टेष्विष्वाख्याश्चौजे ते व्यस्तस्थाः क्षेत्रं ।
होरा त्र्यंशो नंदांशोऽर्कांशस्त्रिंशोऽयं षड्वर्गः ॥ ३६ ॥
वर्गो ज्ञेयः खेटस्य स्यात् यो यस्योक्तः स श्रेष्ठः ।
सन्मित्रस्वस्थः प्राग् लग्ने द्व्यंघ्रीभेऽन्यांशः कुर्यात् ।
नाशं चाद्व्यंघ्रौ कन्या तौली चापी पुंयुग्मांशः ॥
शस्तस्ते नंदांशा नो साब्जक्रूराः सौख्यं दद्युः ॥३७॥

दृष्टिविचारः । जन्मनि सक्रूरराश्यंशस्य निषेधः—

दद्यादायुर्भर्तुश्चांशेशोंऽशं लग्नं पश्यन् वा ।
प्राग्स्तद्व्यांशास्तेशोंऽशास्तं लग्नास्तं वध्वाः ॥
लग्नेशो लग्नं चैवं पुंसः श्रेष्ठं कुर्यान्नार्याः ।
अस्ताधीशश्चास्तं चेदंशादेर्मुख्या स्याद् दृष्टिः ॥३८॥
दृष्टिर्न स्याल्लग्ने खेटानां द्वित्र्यष्टांत्यस्थाना-
मंशास्ताभ्यां शुद्धं लग्नं पुंनार्योरायुर्वृद्ध्यै ॥

तद्धीनं रिष्टायोत्पत्तौ योंऽशः स क्रूरोऽस्मिन् स्यात् ।
चंद्रस्थे नेष्टं लग्नस्थेऽप्योजस्वी चेन्नाऽसौ स्यात् ॥३९॥

भर्तृयुग्मयोगविचारः—

स्याच्छीघ्रं लग्नं सांशं वर्ज्यं नक्रे जूके चंद्रे ।
लग्ने तूर्णे चैवं चंद्रे योषित्खेटैर्दृष्टे स्यात् ॥
कामिन्याः पुंयुग्मं चेत्केंद्रे यायी चौजस्वी वा ।
युग्मेऽब्जे क्रूरैर्दृष्टे चेत्सौम्यैर्दृष्टोऽब्जो न स्यात् ॥४०॥

लग्नद्रेष्काणनवांशपतानां षडष्टमवर्जनं, ग्रहस्पष्टीकरणम्—

न स्यादायुर्लग्नेशेऽष्टस्थे षष्ठे वा दंपत्यो-
श्चैवं द्रेष्काणेशे चांशाधीशेऽथो याता नाड्यः ॥
मध्यांशैर्निघ्नाः सर्वाभिर्लब्धं चांशाद्यं हीने ।
याते खेटे स्वं हीनं चांशाधिक्ये खेटः स्पष्टः ॥४१॥

अयनांशलग्नेष्टकालानयनम्—

स्पष्टः शाको वेदच्छंदोऽब्ध्यूनः षष्ट्यासेंऽशाः स्युः ।
तैर्युक्तौ लग्नार्कौ कृत्वा रात्रौ भार्धाढ्यं सूर्यम् ॥
भानोर्भोग्यांशैर्निघ्नं स्वं भं लग्नस्यांशैर्भुक्तैः ।
खाग्न्याप्त्योर्योगश्चांतर्लग्नाढ्यः कालः स्याच्छुद्धः ४२

नवमांशोपरिलग्नस्पष्टीकरणम् वर्गोत्तमफलं च—

शुद्धं लग्नं स्यादेवं दिग्भिर्निघ्ना रामैर्भक्ताः ।
नंदांशा भुक्ता लग्नस्य त्रिंशांशाः स्पष्टा ज्ञेयाः ॥
काले साध्येंऽशस्यादौ त्र्यंशं चापस्य त्र्यंशार्धं ।
दद्याद्वा वर्गश्रेष्ठादन्यं चांत्यांशं नो लग्ने ॥ ४३ ॥

अस्तंगतलग्नेशादेर्निषेधः—

लग्नेशेऽस्तं याते पुंसो नेष्टं द्यूने वध्वाः ।
सौम्ये वा कन्यापुंयुग्मांशौ नेष्टौ चान्यैर्मध्यौ ॥
यस्मात् ज्ञो भास्वद्रश्मौ वर्ती शश्वच्चोपार्कत्वं
गच्छत्यस्माद्वा लग्नेशश्चांशाधीशः स्यान्मध्यः ॥४४॥

मध्यमफलग्रहस्य सौम्यदृक्कालादिबलवशाच्छ्रेष्ठत्वं, क्रूरदृक्नीचादिवशादनिष्टत्वं, चोत्तमाधमभेदेन रेखाप्रदाग्रहः—

मध्यः खेटः कालाद्यैश्चौजोभिर्युक्तः श्रेष्ठश्चेत् ।
सौम्यैर्दृष्टः स्यात् क्रूरैर्दृष्टो नीचादिस्थो नेष्टः ॥
एवं श्रेष्ठोऽपि स्यान्मध्यस्त्र्यायाष्टारिस्थौ श्रेष्ठौ ।
सूर्याकौं शेषस्थौ मध्यौ वर्ज्यौ लग्नद्यूनस्थौ ॥ ४५ ॥
लग्नद्यूनाष्टस्थो भौमो वर्ज्यः कर्मस्थोऽप्यन्यैः ।
शत्रुत्र्यायस्थः श्रेष्ठोऽन्यस्थो मध्योऽथो जीवज्ञौ ॥
रिप्फद्यूनाष्टस्थौ वर्ज्यावन्यस्थौ श्रेष्ठावन्यैः ।
रिप्फे मध्यौ शुक्रस्त्याज्योऽष्टारिद्यूनार्काग्निस्थः ॥४६॥
अर्काग्न्योर्मध्योऽन्यैः शेषेषु श्रेष्ठो द्वित्र्यायस्थः ।
चंद्रः श्रेष्ठोऽन्यैश्चांबुस्थो मूर्त्यष्टारिस्थो वर्ज्यः ॥
शेषस्थो मध्यो राहुः केतुश्चांबुद्यूनाद्यस्थौ ।
नेष्टौ सौरेणान्यैस्तुल्यौ जीवो मध्यो वा द्यूने ॥४७॥

चंद्रान्वितराहुकेतुवर्जनं, दोषाणां चादोषत्वम्—

द्यूने चंद्रो नेष्टः केतोश्चागोर्लग्नाद्बंधुस्थः ।
केतुर्मध्यः स्याद्दोषाणां लक्षं हंतीज्यः केंद्रे ॥

द्यूनं हित्वा शुक्रो भूम्नश्चैवं ज्ञो यैः सद्योगैः ।
ये दोषा बाध्यंते तत् ज्ञैः सम्यक् चिंत्यास्ते योगाः ॥४८॥

क्रियद्ग्रहरेखायां लग्नं कार्यं, नंदादियोगानां फलम्—

योगैस्तैः पंचांगादीन् संशोध्यार्यैर्लग्नं देयम् ।
बाणैः खेटैः श्रेष्ठैः शस्तं वेदैर्मध्यं तल्लग्ने ॥
ज्ञे [1]नंदः शुक्रे भद्रो जीवे जीवो[3] जीवज्ञाभ्यां ।
जीमू[4]तः काव्येज्याभ्यां स्थाणु[5]र्जेयो विच्छुक्राभ्याम् ४९
शुक्रज्ञेज्यैः संजेयो[7] नंदे[1] कन्योढा पृथ्वीशं ।
पुत्रं सूते [2]भद्रे सा देवीशब्दं प्राप्नोति द्राक् ॥
[3]जीवेऽपि श्रीयुक्ता धर्माढ्या सा जीमू[4]ते नप्तुः ।
पुत्रान् दृष्ट्वा भर्त्रा सार्धं प्राप्नोत्यंते देवत्वम् ॥५०॥
दैवाज्जातश्चेदुद्वाहः स्था[5]णौ सा सत्पुत्राढ्या ।
वर्गस्यौन्नत्यं कुर्या[6]ज्जेये हीनज्ञातेर्जाता ॥
सैश्वर्यं सौभाग्यं चेत्यूढा [7]संजेये सद्भोगान् ।
भुक्त्वा क्ष्मापालं पुत्रं दृष्ट्वान्ते याति स्वर्लोकम् ॥५१॥

शुभाशुभयोगानां निर्देशः । व्यालादियोगफलम्—

लोकात् ज्ञेया अन्ये ये शस्ता योगाश्चाथो निंद्याः ।
लग्नेऽर्के व्या[1]लो भौमे पाता[2]लाख्यः कोणे [3]क्षीणः ॥
राहौ [4]ध्वांतः केतौ [5]कालस्तेषूढा सा वैधव्यं ।
चायच्छत्याचार्यैस्ते योगा वर्ज्या भावेऽपि स्युः ॥५२॥

भावसंधिसाधनं, लग्नजन्मराशितोऽनिष्टलग्नानि—

भावांश्चिंत्याश्चार्काद्यद्द्रात्र्यर्धं तद्वल्लग्नाद् ।
वा कृत्वा भूयस्तस्मात्तन्नाडीभिर्लग्नं साध्यम् ॥

अस्तंगतलग्नेशादेर्निषेधः—

लग्नेशेऽस्तं याते पुंसो नेष्टं द्यूने वध्वाः ।
सौम्ये वा कन्यापुंयुग्मांशौ नेष्टौ चान्यैर्मध्यौ ॥
यस्मात् ज्ञो भास्वद्रश्मौ वर्ती शश्वच्चोपार्कत्वं
गच्छत्यस्माद्वा लग्नेशश्चांशाधीशः स्यान्मध्यः ॥४४॥

मध्यमफलग्रहस्य सौम्यदृक्कालादिबलवशाच्छ्रेष्ठत्वं, क्रूरदृक्-नीचादिवशादनिष्टत्वं, चोत्तमाधमभेदेन रेखाप्रदाग्रहः—

मध्यः खेटः कालाद्यैश्चौजोभिर्युक्तः श्रेष्ठश्चेत् ।
सौम्यैर्दृष्टः स्यात् क्रूरैर्दृष्टो नीचादिस्थो नेष्टः ॥
एवं श्रेष्ठोऽपि स्यान्मध्यस्त्र्यायाष्टारिस्थौ श्रेष्ठौ ।
सूर्यार्कीं शेषस्थौ मध्यौ वर्ज्यौ लग्नद्यूनस्थौ ॥ ४५ ॥
लग्नद्यूनाष्टस्थो भौमो वर्ज्यः कर्मस्थोऽप्यन्यैः ।
शत्रुत्र्यायस्थः श्रेष्ठोऽन्यस्थो मध्योऽथो जीवज्ञौ ॥
रिष्फद्यूनाष्टस्थौ वर्ज्यावन्यस्थौ श्रेष्ठावन्यैः ।
रिष्फे मध्यौ शुक्रस्त्याज्योऽष्टारिद्यूनार्काग्निस्थः ॥४६॥
अर्काग्न्योर्मध्योऽन्यैः शेषेषु श्रेष्ठो द्वित्र्यायस्थः ।
चंद्रः श्रेष्ठोऽन्यैश्चांबुस्थो मूर्त्यष्टारिस्थो वर्ज्यः ॥
शेषस्थो मध्यो राहुः केतुश्चांबुद्यूनाद्यस्थौ ।
नेष्टौ सौरेणान्यैस्तुल्यौ जीवो मध्यो वा द्यूने ॥४७॥

चंद्रान्वितराहुकेतुवर्जनं, दोषाणां चादोषत्वम्—

द्यूने चंद्रो नेष्टः केतोश्चागोर्लग्नाद्बंधुस्थः ।
केतुर्मध्यः स्याद्दोषाणां लक्षं हंतीज्यः केंद्रे ॥

पंचांगाद्यैः शुद्धं मूर्त्यष्टारिस्थं चंद्रं हित्वा।
कैश्चिद्भौमोऽष्टाद्यास्तस्थो वर्ज्यः शुक्रोऽष्टारिस्थः ५८

अष्टारिस्थो लग्नेशो वर्ज्यश्चास्तं प्राप्तो नान्यैः।
ते वर्ज्या यस्माद् द्यूने सूर्ये श्रीपेणास्मिन् लक्ष्म्याः॥

उद्वाहश्चाकारि ग्राह्यं सार्कं सौरे तद्वारे।
चान्यैस्त्यक्तं शन्यर्द्धाद्यामार्द्धाद् व्यर्कं देवेज्ये॥५९॥

ग्रंथसमाप्तिः, प्रणामपूर्वं गणेशस्मरणम्—

देवेज्ये पूर्णाब्जे भे, पूर्णव्योमेंद्राढ्ये साब्धौ
पूर्णाब्धौ शाके प्राप्ते, पूर्णेकेऽर्के, जीवे वारे॥
पौषे पूर्णायां पूर्णे चंद्रे पुष्ये पूर्णं प्रोक्तम्।
वैवाह्यं कर्मेदं नाडीमाने नत्वा हेरंबम्॥ ६० ॥

स्ववंशपरिचयः—

श्रीगौडज्ञातिजातो द्विजवरतिलकः श्रीजगन्नाथशर्मा।
तत्सूनुः श्रीमहीनद्युदधियुतितटस्तंभतीर्थाधिवासी॥
रामः पीतांबरेण द्विजचरणनतेनार्थसारं सुबोधम्।
तज्जेनोद्वाहसंज्ञं लघुपटलमकारीशरामप्रसादात्॥६१॥

॥ इति श्रीमद्गौडज्ञातीयपंडितरामात्मजेन पीतांबरेण
विरचितं नाडीमानविवाहपटलं संपूर्णम्॥ 55

